सवितारायस्मृतिसंरक्षण-ग्रन्थमाला ।

# प्रायश्चित्त-प्रकरणम् ।



बालवलभीभुजङ्गापरनाम-भट्टभवदेवेन

प्रणीतम् ।

राजसाहीस्थ-महाराणीहेमन्तकुमारी-संस्कृतविद्यालयस्य प्रधानाध्यापकेन

वेदान्ततीर्थोपाधिक-श्रीगिरीशचन्द्रशर्म्मणा

संस्कृतम् ।



THE

# PRĀYASCHITTA-PRAKARAṆAM

( A TEXT ON EXPIATORY RITES )

BY

BHAṬṬA BHAVADEVA




Edited By

**Girish Chandra Vedantatirtha,**

Senior Professor, Maharani Hemantakumari Sanskrit College, Rajshahi.

With an Introduction

by

**Nani Gopal Majumdar, M. A.**



PUBLISHED BY

THE VARENDRA RESEARCH SOCIETY,

RAJSHAHI, BENGAL.

March, 1927.





## प्रायश्चित्त-प्रकरणम्

# सूचीपत्रम्।

# INTRODUCTION.

The Prāyaśchittaprakaraṇa, or Prāyaśchitta-nirūpaṇa as it is called in some manuscripts (see Aufrecht's *Catalogus*, part I, p. 363), is now published for the first time. Hitherto it was known only from a few catalogues of manuscripts e. g. Haraprasad Sastri's *Notices*, Vol. I, p. 237 and principally from an article by Monomohan Chakravarti, entitled "Bhaṭṭa Bhavadeva of Bengal," published in the Journal of the Asiatic Society of Bengal, 1912, pp. 333-48. Bhavadeva, the author of this book was a Brahman of the Sāvarṇa gotra, and belonged to the village of Siddhala in Rāḍhā. He became the minister of king Harivarman of Bengal, who flourished about the last quarter of the 11th. or the first quarter of the 12th. century A. D. and issued a copper-plate grant from Vikramapura in East Bengal. The famous temple of Anantavāsudeva at Bhuvaneśvara in Orissa testifies to the religious ardour of Bhavadeva. An inscribed stone slab, recording the construction of this edifice by him and giving a glorious account of his manifold activities, may even now be seen built into the inner face of the western compound wall of the temple. The inscription was edited by Professor Kielhorn in the *Epigraphia Indica*, Vol. VI, pp. 203-7. It has been recently re-edited by me with an English translation and a facsimile and is being published by the Varendra Research Society in *Inscriptions of Bengal*, Vol. III, pp. 25-41. The remarkable career of Bhavadeva is well depicted in this praśasti composed by his friend, the poet Vāchaspati. He appears to have been not only a statesman but also a great scholar and writer. He wrote on the Mīmāṁsā philosophy following the line of Kumārila Bhaṭṭa and also on Astronomy, Astrology and Smṛiti. He was indeed regarded, says his panegyrist, as a "second Varāhamihira". The appellation by which he was

universally known was "Bālavalabhībhujaṅga'.' The inscription gives the following genealogy :



Bhavadeva
(received land grant from a king of Gauḍa)
|
Rathāṅga
|
Atyaṅga (Sphurita)
|
Budha
|
Ādideva + Devakī
(minister of a king of Vaṅga)
|
Govardhana + Sāṅgokā.
|
BHAVADEVA
(minister of king Harivarman)

None of Bhavadeva's works on Astronomy or Astrology has survived. On Mīmāṁsā we have a fragment of his Tautātitamatatilaka (a gloss on Kumārila's Tantravārttika) and on Smṛiti, his Karmānushṭhānapaddhati, a code of Brahmanical rites, which is recognised and followed even to this day in Bengal. The opening verse of the latter is :— Chaturvadana-sadmastha-chaturveda-kuṭumbine dvijānushṭheya-satkarmma-sākshiṇe Brahmaṇe namaḥ. This verse also occurs at the beginning of a work called the Dattakatilaka of which there is a manuscript in the Varendra Research Society's collection. The second verse in this manuscript ascribes the authorship of the book to Bhavadeva :—Vyavahārasya tilake dattakādeḥ prasaṅgataḥ kriyate Bhavadevena tilako dattakasya cha. On the strength of these two couplets, the editor of the present work, Pandit Girīśa Chandra Vedāntatīrtha, infers (see his Bhūmikā) that both the treatises are from the pen of the great Bhavadeva, minister of Harivarman. But internal evidence is against this

inference. The author of the Dattakatilaka quotes the Smṛiti works Ratnākara and Kalpataru (Ratnākara :—Kalpataru-prabhritibhir-uktaṃ etc.) *i. e.* the Krityaratnākara or Vivādaratnākara of Chaṇḍeśvara Ṭhakkura (1314 A. D.) and the Kṛityakalpataru of Lakshmīdhara, minister of the Gāhaḍavāla king Govindachandra (1114 A. D.). So this Bhavadeva could not possibly have flourished before the 14th. century and must be different from the author of the Prāyaśchitta-prakaraṇa.

The work treats of the atonements or expiatory rites a Hindu has to perform if he commits a sin and wants to be restored to society. The different topics discussed by the author are indicated in the Contents.

The text is collated with the help of two Mss. referred to as *Ka* and *Kha*. Ms. *Ka* comes from the house of Pandit Navakiśora Tarkachūḍāmaṇi of the village of Kāṭihālī in the District of Mymensingh and is evidently the same as that described in H. P. Sastri's Notices of Sanskrit Manuscripts, Vol. I, pp. 237-38 (No. 240). Ms. *Kha* belongs to Pandit Vāmanadāsa Vidyāratna, of the village of Rājdiyā in the District of Dacca.

*Rajshahi, the 31st March, 1927.* N. G. Majumdar.

---

# भूमिका।

बालवलभीभूजङ्गापरनाम्ना भट्टभवदेवेन वहवो ग्रन्था विरचिताः। वाचस्पति कविलिखिततदीयप्रशस्तिपाठादवगम्यते य दसौ ब्रह्माद्वैतवादिना मग्रणी रुद्भूतविद्याया अद्भुतस्रष्टा (व्याख्या-कौशलेन निगूढार्थ-प्रकाशकः) कुमारिल-भट्ट-वाक्यतात्पर्य्यवित् बौद्धरूपसमुद्रस्यागस्त्यमुनिः। (एतेनैतदवगम्यते भवदेव-प्रभावेणैव वङ्गप्रदेशात् बौद्धप्रभावः सर्व्वथोन्मूलितः) अन्येषामपि पाषण्डानां मतमनेन खण्डितम्।

"ब्रह्माद्वैतविदाभूदाहरणभू रुद्भूतविद्योदभुत-
स्रष्टा भट्टगिरां गभीरिमगुण-प्रत्यच्च-द्दश्वा कविः।
बौद्धाम्भोनिधि-कुम्भसम्भवमुनिः पाषण्ड-वैतण्डिक-
प्रज्ञाखण्डन-पण्डितोयमवनौ सर्व्वज्ञ-लीलायते॥" (२०)

अपिच प्रशस्तेरेकविंशश्लोकेनास्य ज्योतिःशास्त्र-पारदर्शित्व मभिनव-प्रणाल्याविष्कर्त्तृत्वञ्च वर्णितम्। यथा—

"सिद्धान्त-तन्त्र-गणितार्णव-पार-दृश्वा
विश्वाद्भुत-प्रसविता फलसंहितासु।
कर्त्ता स्वयं प्रथयिता च नवीनहोरा-
शास्त्रस्य यः स्फुट मभू दपरो वराहः॥"

अस्यार्थः—ज्योतिः शास्त्रस्य सिद्धान्तः संहिता होराचेति स्कन्धत्रयं प्रसिद्धम्।

तत्र सिद्धान्तस्कन्धस्य च सिद्धान्तः तन्त्रं करणञ्चेति भागत्रयं लक्ष्यते। सिद्धान्तस्कन्धे ग्रहगतिगणना विवृता, अतएवास्यापरं नाम "गणित" मिति। यत्र सृष्टेरादिकालंसीमत्वेनावलम्ब्य ग्रहगतिगणनाया उपायो निर्द्दिश्यते, तस्य नाम "सिद्धान्तः" इति। यत्र चतुर्युगादिकालमवधित्वेनावलम्ब्य ग्रहगतिः कथ्यते, तस्य नाम तन्त्रं। यत्र च कल्पितं कालमवधिं कृत्वा ग्रहगणना क्रियते तस्य नाम करणम्। संहितास्कन्धे राष्ट्रस्य विशेषां वा शुभाशुभफलस्य निर्णयोपायः कथ्यते, होरास्कन्धे तत्तद्राशिगतं फलं विविच्यते। संहिता होराचेत्युभयमपि फलशास्त्रम्, वराहमिहिरस्तु ज्योतिःशास्त्रप्रवर्त्तकाना मष्टादशाना मृषीणां मध्ये पञ्चानामेव सिद्धान्तग्रन्थं दृष्टवान्। अपरेषां त्रयोदशानां ग्रन्था इतः पूर्व्वमेव नाममात्रशेषा अभवन्। स प्राप्तपञ्चसिद्धान्त-

सारमवलम्ब्य "पञ्चसिद्धान्तिकां" व्यरचयत्। अयमेव तस्य सिद्धान्तग्रन्थः। संहितास्कन्धे च स "बृहत्संहितां" होरास्कन्धे "बृहज्जातकं लघुजातकञ्च" विरचितवान्।

ऋषिप्रणीतहोराशास्त्रापेक्षया वराहप्रणीतहोराशास्त्रस्य नवीनप्रणाली-पेशलत्व मभूत्। अतएवास्य "नवीनहोरेति" समाख्या युज्यते। भवदेव प्रशस्तौ च सोऽ"परवराह" इत्युक्तः। अनेनापि वराहवदभिनवप्रणाली माविष्कुर्व्वता ग्रन्थो व्यरचि ; तेनास्य वराहमिहिरेण स्फुटं साद्दृश्यम्।

किञ्च—प्रशस्ते द्वाविंशश्लोकार्थतो ज्ञायते—अयं धर्म्मशास्त्रेषु विविधान् निबन्धान् रचयित्वा प्राचीनतमनिबन्धान् हतगौरवान् चकार। मुनीनां धर्म्मगाथाश्च व्याख्यया विशदीकुर्व्वन् स्मार्त्तक्रियासंशयं सर्व्वथा दूरीचकार। यथा—

"यो धर्म्मशास्त्रपदवीषु जरन्निबन्धान्
अन्धीचकार रचितोचितसत्प्रबन्धः।
सव्याख्यया विशदयन् मुनिधर्म्मगाथाः
स्मार्त्तक्रियाविषयसंशय मुन्ममार्ज्ज ॥ २२

अयं कुमारिलभट्टमतानुसारेण मीमांसादर्शनबोधोपयोगिन मेकं ग्रन्थं रचितवान्। समग्रं सामवेदमधिजगे। विविधासु कलासु तन्त्रापरनामागम-शास्त्रेषु अस्त्रवेदायुर्व्वेदादिषु च कृतपरिश्रम आसीदिति त्रयोविंशश्लोकार्था दवगम्यते। यथा—

"मीमांसायामुपायः स खलु विरचितो येन भट्टोक्तनीत्या
यत्र न्यायाः सहस्रं रविकिरणसमा न त्रमन्ते तमांसि।
किं भूम्ना सीम्नि साम्नां सकलकविकलास्वागमेष्वत्र शास्त्रे
ष्वायुर्व्वेदास्त्रवेदप्रभृतिषु कृतधीरद्वितीयोयमेव ॥ २३

सर्व्वशास्त्रनिष्णातोयं हरिवर्म्मनामवङ्गनृपतेः प्रधानामात्यपद मलञ्चकारेति प्रशस्त्यर्थादेव ज्ञायते। हरिवर्मातु पालनृपतिशेषसमये वङ्गभूमिमधिचकारेति ऐतिहासिकानां समयः।

भवदेवस्य विविधस्मृति-निबन्धकर्त्तृत्वं तत्परवर्त्तिशूलपाणिमहामहोपाध्याय रघुनन्दनभट्टाचार्य्यप्रभृतिनिबन्धकृतां ग्रन्थपाठादप्यवगम्यते। परन्त्वेतदीयग्रन्थे-ष्वधुना केवलं प्रायश्चित्तप्रकरणं सम्बन्धविवेकः दत्तकतिलकश्चेति स्मार्त्त-निबन्धत्रयं सामवेदिनां संस्कारोपयोगिनी कर्म्मानुष्ठानपद्धति श्चास्माभिर्दृश्यते। "दत्तक-

तिलक”स्तु व्यवहारतिलकसमाख्यस्य ग्रन्थस्य कश्चिदंश एव। अन्ये ग्रन्था विलुप्ता आहोस्वित् कुत्र प्रच्छन्नाः सन्ति तत् नाधिगम्यते।

अयञ्च भवदेवो बालक-जिकन-श्रीकर-प्रभृतिनिवन्धॄणां नामासकृदुल्लिलेख। बालकादयः सर्व्वे वङ्गीया निवन्धार इति प्रतिभाति, यत एतेषां नाम मतञ्च वङ्गीयैरेव निवन्धृभिरनेकश उल्लिखितं खण्डितञ्च। किञ्चान्यत्—बालकादीनां दुर्गोत्सवव्यवस्थाकर्त्तृत्वदर्शनात्तेषां वङ्गीयत्वं सुतरां प्रतीयते। नहि वङ्गीत्यान्यत्र दुर्गोत्सवानुष्ठानं ज्ञायते। अपिच भवदेवलिपिभङ्गेरेतत् प्रतीयते यत् तत्कालपर्य्यन्तं वङ्गेषु स्मार्त्ताचारः सर्व्वथानुसृतः। वङ्गीयनिवन्धैरेवच वङ्गानां धर्म्मानुष्ठान मभूत्। न तदात्वे देशान्तरनिवन्धानुसरणम्। अस्य तु “बालवलभीभुजङ्ग” इति उपनाम्नः कोऽर्थः ? किंवा गौरवमनेन सूचितमिति नाद्यापि सर्व्वथा निरनायि।

बलभीनाम्ना प्रसिद्धा काचिन्नगरी वङ्गेषु आसीत्। कालक्रमेण तस्यां हत-प्रभायां अभिनवा काचिन्नगरी केनापि निर्म्मिता, सैवच नूतनत्वात् “बालवलभी” संज्ञां लेभे। तत्रत्यानामतीव प्रेमास्पदत्वात्तु भवदेव उपनायकपर्य्याय-भुजङ्गनाम्ना समाख्यातः। उपनायकोहि नायिकायाः समधिकप्रीतिभाजनमिति लोक-प्रसिद्धम्। अनेन विशेषणेन बालवलभीनगर्य्या नायिकात्वं भवदेवस्योप-नायकत्वञ्च सूचितम्। वङ्गराजधानीभूता सा नगरी उपनायकभवदेवस्य सर्व्वथा वशवर्त्तिनी आसीदिति तात्पर्य्यं प्रतिभाति।

साहित्यदर्पणकारो विश्वनाथकविराजो ऽष्टादशभाषा-वारविलासिनी—भुजङ्ग-विशेषणकीर्त्तनेनात्मगौरवं मेने। अत ईदृशो तदानीन्तनरीति रित्यस्माकं मतिः।

भवदेवभट्टेन तु कर्म्मानुष्ठानपद्धतिसमारम्भे

“चतुर्वदन-सद्मस्थ-चतुर्व्वेद-कुटुम्बिने।
द्विजानुष्ठेय-सत्कर्म्म-साक्षिणे ब्रह्मणे नमः॥”

इति नमस्कारश्लोको व्यलेखि। दत्तकतिलकोपक्रमेऽपि अयमेव निवद्धः।

यद्यप्यद्यत्वे वङ्गेषु धर्म्मकृत्ये रघुनन्दनभट्टाचार्य्य-मतमेव शिष्टसम्मतं, तथापि सामवेदिब्राह्मणानां संस्कारानुष्ठानं भवदेवमतेनैव क्रियते। अतएव रघुनन्दन-कृतं संस्कारतत्त्वं वैफल्यमुपगतम्। किञ्चान्यत्—अस्य कर्म्मानुष्ठानपद्धतिः पुरोहिताना मनुष्ठानसौकर्य्यकामानां परिवर्त्तन-परिवर्द्धनव्यापारवशादतीव वैचित्र्य मुपगता। विभिन्नप्रदेशलिखितपुस्तकेषु महान् प्रभेदः परिलक्ष्यते।

भवदेवपद्धतिलिखितमन्त्राणां गुणविष्णुकृता व्याख्या वङ्गेषु समादृता। गुणविष्णोर्ग्रन्थ"च्छन्दोगमन्त्रभाष्य"नाम्ना प्रसिद्धः। तत्र च सामवेदिनां श्राद्धप्रयोग वृषोत्सर्ग-प्रभृतिक्रियासम्बद्धा अपि मन्त्रा व्याख्याताः। हस्तलिखितभवदेवपद्धत्युपरि गुणविष्णुकृता व्याख्या गृहे गृहे दृश्यते। गुणविष्णोः सम्पूर्णग्रन्थस्य प्रतिदेशं सुलभ एव। परन्तु पाठानां सामञ्जस्यं न दृश्यते। अयं ग्रन्थः पुस्तकविक्रय-व्यवसायिभि र्वङ्गाक्षरैः खण्डशः प्रकाशितः। किन्तु कुत्रापि सर्व्वथा पाठशुद्धि र्न लक्ष्यते। द्वारभङ्गप्रदेशेऽपि अयं ग्रन्थो मुद्रितः, परन्तु सोऽपि न सम्यक् दोषनिर्म्मुक्तः। वरेन्द्रानुसन्धानसमितिपुस्तकालये नानादेशीयानि गुणविष्णुव्याख्यापुस्तकानि संगृहीतानि।

अयञ्च भवदेवभट्टः सावर्णगोत्रः सिद्धलग्रामीनश्रोत्रियो राढ़ीय ब्राह्मणः। न केवलमसौ शास्त्रबलेनैव बलवान् अपितु बाहुबलेनापि तदानीमप्रतिरथ आसीदिति तदीयप्रशस्तिपाठादेवावगम्यते।

अलं पल्लवितेन।

एतद्विदितमस्तु यत् प्रायश्चित्तप्रकरणग्रन्थसम्पादनाङ्ग-मुद्रापण-शोधनक्रियायां वरेन्द्रानुसन्धानसमितिचित्रशालाध्यक्षेण श्रीयुक्तननीगोपालमजुमदारमहोदयेन विशेषेण साहाय्यं कृतम्। एतेन महदुपकृतम्।

श्रीमत् पूर्णानन्दवंश-करीर
श्रीगिरीशचन्द्र वेदान्ततीर्थस्य।

## आदर्शपुस्तक-विवरणम्।

"क" पुस्तकं मयमनसिंह-प्रदेशान्तर्गत-नेत्रकोणापविभागाधीन-काटिहाली-ग्राम-वास्तव्यस्वर्गत-स्मार्त्तशिरोमणि-नवकिशोरतर्कचूड़ामणिमहोदयात्मजश्रीमती हरेन्द्रचन्द्रस्मृतितीर्थादधिगतम्।

"ख" पुस्तकं ढाका-विक्रमपुरस्थराजदीयावास्तव्यस्मार्त्तप्रवरश्रीयुक्तवामनदासविद्यारत्नमहोदयादधिगतं पुस्तकमवलम्ब्य लिखितम्। इदन्तु नितान्तमशुद्धम्।

"क" पुस्तकेऽपि अन्तरान्तराऽशुद्धिः पाठ-व्युत्क्रमश्च विद्यते।

तदेतद्वयमवलम्ब्य पाण्डुलिपि र्निर्म्मिता। भवदेवसम्मतमुनिवचनपाठानामर्व्वाचीननिबन्धधृतपाठेन वैषम्यं दृश्यते।

अपि च यद्यपि क-संज्ञकं पुस्तकं नातिप्राचीनं तथाप्यस्य लिपिवैचित्रं लक्ष्यते। अस्याक्षराणि न सुखपाठ्यानि। अदृष्टचराकृतीनि च। पुस्तके लिपिकालो लेखकनाम च नास्ति।

कृत्रिमपत्रे ( कागज् ) इदं लिखितम्। पत्रसंख्या सपादाष्टचत्वारिंशत् पत्राणि विंशत्यङ्गुल परिमितानि। प्रतिपत्रं पंक्तिसंख्यानव।

ख संज्ञकपुस्तकस्यापि लिपिकालादिकं नास्ति। इदमपि कृत्रिमपत्रे लिखितम्।

# भवदेवधृतग्रन्थग्रन्थकृन्नामानि ।

# प्रायश्चित्तप्रकरणम् ।

ओं नमो गणेशाय ॥

अनादिभवसम्भूत-पापप्रशम-कारणम् ।
स्मरणं वासुदेवस्य यस्य तस्मै नमोनमः ॥
मन्वादिस्मृति मालोक्य सुविविच्य पुनः पुनः ।
क्रियते भवदेवेन प्रायश्चित्तनिरूपणम् ॥

प्रायश्चित्ते निरूपणीये गुरुत्वात् पञ्चमहापातकप्रायश्चित्तनिरूपणपुरःसरमेवेतरप्रायश्चित्तनिरूपणे कर्त्तव्ये मन्वादिवचनक्रमानुरोधेन प्रथमं ब्रह्मवधप्रायश्चित्तमेव निरूप्यते ।

तथाच **मनुः**—( ११।५५। )

ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥*

तथाच **विश्वामित्रासित-स्वयम्भुवः**—

ब्राह्मणो नच हन्तव्यः सुरा पेया नच द्विजैः ।
ब्राह्मण-स्वर्ण-हरणं न कर्त्तव्यं कदाचन ॥
गुरुपत्नीं न गच्छेच्च संसर्गं तैश्च वर्ज्जयेत् ।
महापातकसंज्ञा हि निर्द्दिष्टैषा मनीषिभिः ॥

अत्र निषेध-विषयस्य हननस्यानिरूपणे हननिमित्तप्रायश्चित्तानिरूपणात् प्रथमं हननमेव निरूप्यते । किमिदं हननं नामेति ? तत्र प्राणवियोग-फलकव्यापारो हननमिति लोकप्रसिद्धमेव । स च यथा साक्षात् कर्त्तुं स्तथा परम्पराकर्त्तुरपीति तेषामपि हन्तृत्वम् । तेन साक्षाद्धन्तृवत् प्रयोजकानुग्राहकानुमन्तृ-निमित्तिनामपि हन्तृत्वात् पञ्चानामेव निषेधविषयत्वम् । नन्वेकशब्दस्यानेकपरत्व मनुगतैकरूपद्वारेण भवति, नचात्र हन्तृशब्द-प्रवृत्तिनिमित्तं किञ्चिदनुगतं पञ्चस्वेकमस्ति ? अथ साक्षात्परम्परासाधारणं

* एतैश्च सह संसर्गः "संवत्सरेण पतति" इति । ११ । १८१ । मनु । (कुल्लूकः)

प्राणवियोग-फलकव्यापारहेतुत्वमात्रमपेक्षितम्, तर्हीषुकारस्यापि-हन्तृत्वप्रसङ्गः। न केवलमिषुकारस्य वध्यस्यापि हन्तृमन्यूत्पादनद्वारेणात्म-वधित्व-प्रसङ्गः। नह्यनुत्पादितमन्युः कश्चित् कमपि व्यापादयति, तेन यथा निमित्तिनो मन्यूत्पादन-द्वारेण निमित्त-वधित्वं तथा आत्मन्यपि * निमित्तवधित्वं दुर्निवार मेवेति। तस्मात् साक्षाद्धननकर्त्तुरेव निषेध-विषयत्व मुचितम्। † उच्यते—सत्य ‡ मेव मिषुकारादि-विलक्षणानुगतैकरूपाभावेऽपि येषां वाचनिकं हन्तृत्वं प्रतीयते, तेषामेव निषेधविषयत्वं। नहि प्रमाणान्तरसिद्धे प्रयोजकादीनां परम्पराकारणत्वे वेदमूलस्य शब्दस्यानुवादकत्वं विधिनिषेधविषयत्व-प्रतिपादनप्रयोजनव्यतिरेकेण सम्भवति।

तथाच **मनुः**—§

> रागाद्द्वेषात् प्रमादाद्वा स्वतः परत एव वा * ।
> ब्राह्मणं घातयेद् यस्तु स भवेद् ब्रह्म-घातक इति ॥

अत्र परतः शब्दप्रयोगात् साक्षादिव प्रयोजकस्यापि वधभागित्वं प्रतीयते। तथाच **मनुः**—

> "बहूना मेककार्य्याणां सर्व्वेषां शस्त्र-धारिणाम्। †
> यद्येको घातक स्तत्र सर्व्वे ते घातकाः स्मृताः॥"

अनेनानुग्राहकस्यापिवधभागित्वं प्रतीयते।

**तथाचापस्तम्ब :—**

"प्रयोजयिताऽनुमन्ता कर्त्ताचेति सर्व्वे स्वर्गनरकफलभोक्तारो यो भूय आरभते तस्मिन् फले विशेष इति"।

अनेनानुमन्तुरपि वध-भागित्वं प्रतीयते।

तथाक्रोशन-ताड़नादिनिमित्तकमन्यूत्पादनद्वारेण निमित्तिनोऽपि वधभागित्वम्।

---

* स्वात्मन्यपि (ख)।
† सुचितमिति (ख)।
‡ पूर्व्वपक्षे दृढ़ीभूते सत्य, वदतिपण्डितः।
§ तथाच विष्णुः। क।
* परत एव च। क।
† शस्त्रपाणिनां। क।

षट्त्रिंशन्मतम्——

"आक्रोशित स्ताड़ितो वा धनैर्व्वा परिपीड़ितः। *
यमुद्दिश्य त्यजेत् प्राणां स्तमाहु र्ब्रह्म-घातकम्॥
अन्यायेन गृहीतस्वः प्रार्थयन् न्यायदर्शनम्।
य मुद्दिश्य त्यजेत् प्राणां स्तमाहु ब्रह्म-घातकम्॥
ज्ञातिमित्र-कलत्रार्थं सुहृत्‌च्चेत्राथे एव वा। †
यमुद्दिश्यत्यजेत्प्राणां स्तमाहु र्ब्रह्मघातकम्"॥

इत्यादिवचनवशाद्यथोक्तानामेव निषेध-विषयत्वम्।

यदितु वचनं विना परम्पराकारणस्यापि महापातकित्वं भवति, तदा कर्म्मकाराणां मद्यपानार्थं कपर्द्दकदानेन प्रयुक्तावपि मद्यपाने प्रयोजक-कर्त्तृत्वा-न्महापातकित्वप्रसङ्गः। तथा महापातकियाजनाध्यापनपरिणयन-प्रयुक्तावपि महापातकित्वेन तथाविधप्रायश्चित्त-प्रसङ्गः। एवमसत्प्रतिग्राहिप्रयुक्तौ धर्म्माधिकरणिकस्यापि प्रयोजकप्रतिग्राहित्वेन ‡ प्रायश्चित्त-प्रसङ्गः। नचैवं सकलशिष्टाचार-विरोधात्।

साक्षात्कर्त्तृगोचरत्वेनैव निषेधोपपत्तौ परम्पराश्रयणस्य चान्याय्यत्वात्। तेन साक्षात्कर्त्तुरेव निषेध-विषयत्वम्। वचन-बलात्तु वधगोचरत्वेन परम्परा कर्त्तुरपीति विवेक्तव्यम्। अतएव यत्रोपकारकरणे दैवाद्वधो निष्पद्यते तत्र वचनबला न्न वधभागित्वम्। तथाच संवर्त्तः—

"औषधं स्नेह माहारं ददद् § गोब्राह्मणेषु च।
दीयमाने विपत्तिः स्या न्न स पापेन लिप्यते"॥

तथाच याज्ञवल्क्यः—(३।८४)

"क्रियमाणोपकारेतु मृते विप्रे न पातकमिमि"॥ *

तेन यत्र भोजनादिना स्वोपकारं कुर्व्वन् कण्ठलग्नभक्तादिरोधेन † म्रियते तत्रापि स्वोपकारार्थंप्रवृत्तौ प्रमादात्तन्मरण-निष्पत्ते ‡ र्नात्मवधभागित्वम्।

---

* धनैर्वापि प्रपीड़ितः। ख।

† ज्ञातिमित्रकलत्रार्थं सुहृत्‌च्चेत्रार्थ मेवच। ख।

‡ प्रतिग्राहकत्वेन। क।

§ दद्याद् गोब्राह्मणेषु च। ख।

* नपातक मित्येवमादि। ख।

† भक्तादिरसेन। क। ‡ प्रमादतो मरणनिष्पत्ते। ख।

एवं पुत्र-शिष्य-भार्य्यादयोऽपि विनयाधानार्थं दण्डे कृते यत्र क्रोध-वशा-म्रियन्ते तत्रापि वचनादेवनदोषः।

तथाच **भविष्यपुराणम्**—

"पुत्रः शिष्यस्तथाभार्य्या शासतश्चेद्विनश्यति।
नशास्तातत्रदोषेणलिप्यतेदेव-सत्तम"॥

एवं यत्र मन्युहेत्वनुत्पादे उन्मत्ततया वैरनिर्य्यातनेन वा ऽन्येन वा प्रयुक्तोऽन्यतोवा हेत्वाभासा*दात्मानं व्यापादयति तत्रोद्देश्यस्य यथोक्तनिमित्तानुत्पादना न वधभागित्वम् किन्तु हन्तुरेव साक्षादात्मवधित्वम्।

तथाचोक्तम्—

"असंबन्धेन यः कश्चिद्द्विजः † प्राणान् परित्यजेत्।
तस्यैव तद् भवेत् पापं नतु यं परिकीर्त्तये दिति"॥

तथा यदि ब्राह्मणोऽप्याततायी भवति तदा तद्वधेऽपि वचनादेव न दोषः।

तथाच **मनुः**—

"आततायिनमायान्त मपि वेदान्तपारगम्। ‡
जिघांसन्तं जिघांसीयान्नतेनब्रह्महाभवेत्॥
गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्"॥

तथाच **विष्णुः** § —

"स्वाध्यायिनं कुलेजातं हन्यादेवाततायिनम्।
न तेन ब्रह्महासस्यान्मनुः * स्तन्मनुः मृच्छति॥"

आततायिनः षोक्ताः। तथाच **मनुः**—

"अग्निदोगरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारापहारी च षड़ेते आततायिनः॥"

---

* हेत्वभावाद्। क।

† असंबान्धेन यः कश्चिद्विप्रः। ख।

‡ मपि वेदान्तगंरणे। क।

§ वशिष्ठः। ख।

* मन्युः क्रोधः।

तथाच **मत्स्यपुराणम्**—

"गृहक्षेत्रादिहन्तारं तथा पत्न्यभिगामिनम्।
अग्निदं गरदञ्चैव तथा चाभ्युद्यतायुधम्॥
अभिचारञ्च कुर्व्वाणं राजगामि च पैशुनम्।
एतेहि कथिता लोके धर्म्मज्ञै राततायिनः॥"

तथाच **बृहद्वशिष्ठः**—

"उद्यतासिः प्रियाधर्षी धनहर्त्ता गरप्रदः।
अथर्व्वहन्ता * तेजोघ्नः षड़ेते आततायिनः॥"

अत्र सर्व्वत्रैवोद्यतास्यादिपदसमभिव्याहारेण प्रवृत्तक्रियएवाततायी नत्वतीतक्रियो भविष्यत्क्रियो वा †।

तत्रापि यदि पलायनादिप्रकारान्तरेणात्मरक्षणं कर्त्तुं न शक्यते तदैव परमस्यहननेदोषाभावो नान्यथा। अन्यथा हि वचनस्य दृष्टार्थत्वसम्भवे सत्यदृष्टार्थत्वकल्पनाप्रसङ्गात्। सर्व्वत्र "आत्मानं गोपायीतेति" त्यनेनात्म-रक्षणस्य विहितत्वात् तत्रात्मरक्षणमेव दृष्टप्रयोजनम्। तच्चेदन्यथापिभवति ‡ तथापि वधोऽदृष्टार्थएवस्यादिति।

अत्र च धनग्रहणेनैवप्राप्तौपृथक्क्षेत्रग्रहणं धनशब्देन बहुतरधनप्रतिपादनार्थम्। तेनक्षेत्रस्यशासनादेः स्वल्पस्याप्यपहर्त्ता धनस्यतुबहुतरस्यैवापहर्त्ता यदपहारेण वर्त्तनोच्छेद एव भवति, स एवाततायीति द्रष्टव्यः।

राजगामि च पैशुनं यदभिधाने सत्यवश्यमेव प्राणात्ययो भवतीति तदभिप्रेतम्।

तेजोघ्नश्चात्रमद्यपानदानेन ब्राह्मतेजोविनाशोप्यभिप्रेतः। अन्यत् सुबोधमेव।

यत्तु **केनाप्युक्तं**—"आततायिवधे न दोषोऽन्यत्रगोब्राह्मणादित्यनेन **सुमन्तु**-वचनेन विरोध इति" तदपि सूत्रावच्छेदाकलनादेव।

तथाच सूत्रत्रयमिदम्—

"आततायिवधे नेत्येकं, दोषोऽन्यत्रेत्यपरं,
गोब्राह्मणात् स्नातः प्रायश्चित्तं कुर्य्यादिति तृतीयकम्॥"

---

* अथर्व्वहन्ता अभिचारकर्त्ता।

† भाविक्रियो वा। ख।

‡ दन्यथा सम्भवति। ख।

तत्र ब्रह्मवधे प्रायश्चित्तमुक्त्वा "य स्तैः सह सम्बन्धंकुर्य्यात्तस्याप्येवमेव प्रायश्चित्त" मित्यभिधाय **सुमन्तुनोक्तमिदं** तेनाततायिवधेनेत्येतत् सूत्रं पूर्व्वोक्त प्रायश्चित्त-निषेधकं, दोषोऽन्यत्रेति आततायिव्यतिरिक्तवधे दोषप्रतिपादकम्।

"गोब्राह्मनात्स्नातःप्रायश्चित्तंकुर्य्या"दितिचप्रायश्चित्ताङ्ग-स्नान-प्रतिपादकम्।

गोहेतुकंस्नानं **व्यासेनोक्तम्।** तथाच **व्यासः**—

"श्रूयन्तेयानितीर्थानित्रिषु लोकेषु नित्यशः।
अभिषिक्तः सम स्तेषां गवां शृङ्गोदकस्यच॥"

ब्राह्मणशब्देनात्रविधिवाक्यमपेक्षितम्। तद्धेतुकञ्च स्नानं यथाविहिताघमर्षणादिपूर्व्वकम्। तेनगोहेतुकंस्नातः ब्राह्मणहेतकंवास्नातः प्रायश्चित्तं कुर्य्यादिति नत्वाप्लवनमात्रेणेति वाक्यार्थः।

यदपि **भविष्य-पुराणवचनम्**—

"हत्वातुप्रहरन्तं वै ब्राह्मणं वेदपारगम्।
कामतोऽपि चरेद्विप्रो द्वादशाब्दाख्यमुत्तम्" मिति॥"

तदपि नाततायिवधविषयम्। प्रहारशब्दस्यवधानभिधायकत्वात्, तेनायमर्थः। योहिचचुराद्यवयवानांप्रकर्षेण प्रहरणेप्रवृत्त * स्तद्वधे कामतो † द्वादशवार्षिकमेव प्रायश्चित्तमित्यर्थः।

एवं विहितवाग्दण्डधनदण्डशरीरदण्डेषु अपराधानुरूपेषु यदि कश्चित् क्रोधवशाद्गलपाशादिना म्रियते तत्रापि न दोषः।

मन्यूत्पादकत्वेऽपि वाग्दण्डादे ‡ र्विहितत्वात् निषेधानवकाशेन दोषाभावात्। यतो न हिंस्यात् § सर्व्वानिभूतानी"त्यनेन साक्षात् परम्परया वा प्राण-वियोगफलकव्यापारकर्त्तृत्वं निषिध्यते। नच निमित्तिनो वाग्दण्डादिनिमित्तातिरिक्तव्यापारान्तरेकर्त्तृत्वमस्ति। तदेवहिमन्यूत्पादनद्वारेण परम्परया-वधकारणंतच्चेद्विहितं कथन्तस्य निषेध-विषयत्वमस्तीति। *

---

* हरणवृत्तः। ख।

† तद्वधेऽपि कामतोऽपि। ख।

‡ दण्डादीनां। ख।

§ माहिंस्यात्सर्व्वाभूतानि इत्येव पाठः तत्त्वकौमुद्यादौदृश्यते। स एव समीचीनः।

* निषेधविषयत्वमपीति। ख।

एतेनैतदुक्तंभवति साक्षात्प्रयुक्तानुग्रहानुमतिनिमित्तरूपकारणभेदात् संक्षेपतः पञ्चविधोवधःतत्कारीचवधकारी। तत्र नरान्तरव्यापाराव्यवहिता प्राण-वियोगफला यत्समवेता प्रवृत्ति रुत्पद्यते, स साक्षाद्वधी। एतेनान्यदीय मारणार्थं प्रयुक्तं विष-सहितान्नं यदिकश्चिदन्य एव खादित्वा * म्रियते तथापि न साक्षाद्वधभागित्वं विषभक्षकव्यापारेणैव भक्षणेन विष-प्रयोक्तुः प्राण-वियोग-फलव्यापारस्य व्यवहितत्वात्। एवं व्याघ्रादिमारणार्थं यन्त्राद्यवरोपणे क्षते प्रयोजनान्तरक्षतवापीकूपादौवा यदि कश्चिदागत्य म्रियते तत्रापिनदोष इत्य-हनीयम्।

न चैवंसति यस्याप्यन्नादौ प्रक्षिप्य विषंदत्तं तन्मरणेपिभक्षकव्यापार-व्यवधानान्नवधभागित्वं† मितिवाच्यं तद्व्यापारस्य भक्षणस्य विष-दातृव्यापार निमित्तत्वेनाव्यवधानात्।

एवंनिरूप्यविषंदीयतेऽनेन चेदुभक्षणीयमिदमन्नादिकं तेनाहमत्र विषं प्रक्षिपामीति तेन पश्चाद्भाविनोऽपि विषभक्षणस्याग्रत एव विषदान-निमित्तत्वेन बुद्धिस्थीभूतत्वात् न व्यवधायकत्वमिति साक्षाद्वधित्वमेवेति।

प्रयोजकश्च द्विविधः अप्रवृत्त-प्रवर्त्तकः प्रवृत्तोत्साहजनकश्च। नचाप्रवृत्त-प्रवर्त्तने प्रयोज्यस्य खड्गादिस्थानीयत्वात् प्रयोजकस्य साक्षाद्वधित्वमेवेतिवाच्यं यतोनहिप्रयोज्यव्यापारमनपेक्ष्य खड्गोद्गमननिपातवत्प्रयुक्तिमात्रेणैव प्राण-वियोगोदृश्यते, किन्तर्हि, सत्यामपि प्रयुक्तौ प्रयोज्यगतखड्गादिनिपात-नानन्तरमेव। नचविषभक्षणदानइवात्रापि अग्रतएव ‡ प्रयोज्यव्यापारस्यापि प्रयोजकव्यापार-निमित्तत्वेनाव्यवधायकत्वम्, अप्रवृत्त-प्रवर्त्तकत्वेन प्रयुक्तिवशादेव प्रयोज्य-व्यापार-सम्भवात् तेनव्यवधायकपुरुषान्तर-व्यापारापेक्षित्वात् साक्षाद्व-धित्वलक्षणाभावेनाप्रवृत्तप्रवर्त्तकस्यापि न साक्षाद्वधित्वं किन्तु प्रयोजकत्वमेव।

एवमनुग्राहकोऽपिद्विविधः। वध्यगत-वैमनस्यापादनेन § तदीयानुग्राह-कान्तरव्युदासेनवा।

अनुमन्ताच स भवति प्रवृत्त्युन्मुखोऽपिहन्ता यदनुमतिव्यतिरेकेण स्वप्रत्य वायशङ्कया न प्रवर्त्तते। न चायं प्रयोजकः प्रवृत्तानुपदेशकत्वात्। नचाप्यनु-

* दन्य एवादित्वा। ख।

† वधभाक्त्व। क।

‡ अतएव। ख।

§ वैमनस्यापादनेन। ख।

ग्राहकः प्रवर्त्तमानप्राणवियोगफलव्यापारप्रवृत्त्यननुकूलत्वात् । किन्त्वनुमतिदानमात्रेण उत्पत्स्यमानप्राणवियोगफलप्रवृत्त्यनुकूलत्वात् प्रयोजकानुग्राहकाभ्यांभिन्नएवानुमन्तेति ।

निमित्तीच यत्कृतमन्यूत्पादनेनप्राणत्यागःसोऽभिधीयते । तेन सप्तविधीहन्ता । कामाकामतश्चतुर्द्दशविध इति वध-स्वरूपनिरूपणम् ।

इदानींप्रायश्चित्तंनिरूप्यते— ।

"प्रायोनाम तपः प्रोक्तं चित्तंनियमउच्यते ।
तपोनियममात्रेण प्रायश्चित्तं प्रचक्षते * ॥"

प्रायश्चित्तञ्चयत्रविशेषेणशृङ्गग्राहिकतयानश्रूयतेतत्रसर्व्वत्र ब्रह्मवधादिषु——

"जाति-शक्ति-गुणापेक्षं सकृद्बुद्धिकृतन्तथा ।
अनुबन्धादिविज्ञायप्रायश्चित्तं प्रकल्पयेत् ॥"

इति **विश्वामित्रवचनात्**, तथा——

"देशं कालं वयःशक्तिंपापञ्चावेक्ष्ययत्नतः ।
प्रायश्चित्तंप्रकल्प्यं स्याद्यत्र चोक्तानिष्कृति" ॥

रिति **याज्ञवल्क्यवचनात्** (३।२८२) प्रायश्चित्तव्यवस्था द्रष्टव्येति ।

वधश्च द्विविधः कामतोऽकामतश्च ।

तत्रकामतःसाक्षाद्ब्रह्मवधे विशेषाश्रवणात् सर्व्वेषामेव वर्णानां मरणान्तिकं प्रायश्चित्तम् । यदाह **याज्ञवल्क्यः**——( ३ । अ । २४६ )

"लोमभ्यः स्वाहेति वाचा † लोमप्रभृतिवैतनुम् ।
मज्जान्तां जुहुयाद्वापि मन्त्रैरेभिर्यथाक्रम" मिति ॥

लोमभ्यः स्वाहा त्वग्भ्यःस्वाहेत्यादिमन्त्रै र्लोमत्वग्लोहितमांसमेदःस्नायवस्थिमज्जान्तां तनुमुत्कृत्योत्कृत्याग्नौजुहुयात् एवं मृतः शुद्धिमवाप्नुयादिति ।

"संग्रामेवाहतोलक्षीभूतःशुद्धिमवाप्नुयात् ।
मृतकल्पः प्रहारार्त्तो जीवन्नपि विशुध्यतीति ॥" (३ । अ । २४७)

---

* चित्तं निश्चय उच्यते तपोनिश्चयमात्रेण
प्रायश्चित्तमिति स्मृतम् । ख ।

† लोमभ्यः स्वाहेत्येवं हि । ख ।

तथाच **मनुः**——( ११। अ। ७२ )

"लक्ष्यं शस्त्रभृतां वास्या द्विदुषा मिच्छयात्मनः।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रि रवाक्-शिराः॥

तथा——गवार्थे ब्राह्मणार्थे वा सद्यः प्राणान् परित्यजेत्।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च॥ इति॥ ( ११। ७९। )

यद्यप्येतेषु वचनेषु कामशब्दोपादानं नास्ति तथापि प्राणान्तिकत्वेन काम विषयत्व मेव द्रष्टव्यम्। तथाच **मध्यमाङ्गिराः**—

"प्राणान्तिकन्तु यत् प्रोक्तं प्रायश्चित्तं मनीषिभिः।
तत्तुकामकृतं प्राप्य विज्ञेयं नात्र संशयः॥"

नच मनुवचनात् कामतो ब्रह्मवधे प्रायश्चित्ताभाव इति वाच्यम्,

तथाच **मनुः**—( ११। अ। ९०। )

"इयं विशुद्धि रुदिता प्रमाप्याकामतो द्विजम्।
कामतो ब्राह्मण-वधे निष्कृति र्न विधीयते॥" इति

यतो द्वादशवार्षिकादिव्रतरूपप्रायश्चित्तमभिधाय मनुनोक्तमिदं तेनेयं द्वादशवार्षिकादिव्रतरूपा विशुद्धि र्या सा कामतो ब्राह्मणवधे निष्कृति र्न भवती त्यवगम्यते। नतु प्राणान्तिकापि न निष्कृतिरिति।

यत्तु **श्रीकरेण** कामतो ब्रह्मवधे प्राणान्तिकं प्रायश्चित्त मभ्युपेत्यापि ज्ञान कामनासमुच्चये प्रायश्चित्ताभाव इत्युक्तं तदयुक्तम्। कामनाया ज्ञानाव्यभिचारात्, ब्रह्मवधविषया एव कामना कामनाशब्देनाभिधेया नतु शूद्रादिवधविषया। न ह्यन्यविषया कामना अन्यत्र प्रेक्षावत्-प्रवृत्तिं जनयति। कामनाप्रयत्नयोः समानविषयत्वात्। यत्रतुभ्रान्त्या प्रमादतो वा शूद्रादिवधकामनया प्रवृत्तस्य ब्रह्मवधोनिष्पद्यते, तत्र विद्यमानापि कामना ब्रह्मवधगोचरत्वेनासत्कल्पैव।

शूद्रादिगतवस्त्रादिदानकामनावतो * भ्रान्त्यादिनाब्राह्मणगतवस्त्रादिदाने यथा तत्र ब्राह्मणगतदानफलत्वेऽपि न कामनाकृतब्राह्मणगतदानफलं अपितु ब्राह्मणगतदानमात्रफलम् तथात्रापि।

शूद्रादिवधकामनया प्रवृत्तस्य भ्रान्त्यादिना ब्राह्मणवधे न कामनाकृत ब्रह्मवधफलं अपितु ब्रह्मवधमात्रफलमेवेति। ब्रह्मवधकामनायान्तु ज्ञान

---

* कामनयैव। क।

पूर्व्वकत्वात् कामनाया ज्ञानस्याव्यभिचारात् कामनया ब्रह्मवधे प्राणान्तिकं प्रायश्चित्तं ज्ञानकामनाभ्यां प्रायश्चित्ताभाव इति वचनमनर्थकमेव। एवं कामना व्यतिरेकेण ज्ञानतो ब्राह्मण-वधे प्राणान्तिकं प्रायश्चित्तं यदुक्तं तदप्ययुक्तं, नहि ब्राह्मण-ज्ञानमात्रं ब्रह्मवधे कारणम्, अपितु ब्रह्मवध-प्रवृत्तिहेतु-ब्राह्मणज्ञानं तस्यच कामना-द्वारेणैव प्रवर्त्तकत्वात् सर्व्वत्रज्ञानकामनयोरव्यभिचार एव।

एतेन यत् कैश्चिदुक्तं बलात्कारेणाकार्य्य-प्रवृत्तौ ज्ञानमस्ति कामना नास्तीति तत् प्रत्युक्तम्, यतो ज्ञानकामनयोः किं समुच्चयः प्रवर्त्तकत्वे हेतुः पृथग्भावो वा इति चिन्त्यते। ज्ञानस्य कामनाद्वारेण प्रवर्त्तकत्वात् समुच्चय एव नतु पृथक्त्वम्। तथाभूतस्यतु ज्ञानस्य सतोऽपि प्रवृत्तिहेतुत्वाभाविना ज्ञानतुल्यत्वमेवेति न व्यभिचारः। अनेनैवाभिप्रायेण **शातातपेनोक्तम्**—

"म्लेच्छेनाधिगता शूद्रा यद्यकामात् कथञ्चन।
कृच्छ्रत्रयं प्रकुर्व्वीत ज्ञानात्तु द्विगुणं भवेत्॥" * इति

तथाच **याज्ञवल्क्येनाप्युक्तम्**—(३।अ॥२२६)

प्रायश्चित्तैरपत्येनो यदज्ञान-कृतं भवेत्।
कामतोऽव्यवहार्य्य स्तु वचनादिह जायते॥"

तत्राकामि कृच्छ्रकृच्छ्रत्रयमभिधाय कामतोद्वैगुण्ये वक्तव्ये यत् **शातातपेन** ज्ञानतो द्वैगुण्य मुक्तं **याज्ञवल्क्येनापि** अज्ञानतः प्रायश्चित्तेन पापक्षयमभिधाय "ज्ञानतोऽव्यवहार्य्यस्त्विति" वक्तव्ये यत् कामतोऽव्यवहार्य्य इत्युक्तं तदपि ज्ञान कामनयोरव्यभिचारव्यवस्थयैवेति मन्तव्यम्। अतो ज्ञानकामनयोरव्यभिचारात् सर्व्वत्रैव महापातके ज्ञानकामनयोः प्राणान्तिकमेव प्रायश्चित्तं न पुनः प्रायश्चित्ता भाव इति सिद्धम्। यत्तु "कामतोऽव्यवहार्य्य स्तु वचनादिह जायते" इत्यनेन ज्ञानकृतपापस्य प्रायश्चित्तेनाप्यनपगम इति याज्ञवल्क्येनोक्तं तत्कामनया पापप्रवृत्ति-निन्दार्थमेवेति। नानावचनेषु "मृतः शुद्धिमवाप्नुया" दित्यनेन पापक्षयरूप-शुद्धि-प्रतिपादनात्। अज्ञानतस्तु साक्षाद्ब्रह्मवधे द्वादश वार्षिकम्।

यदाह **याज्ञवल्क्यः**—(३।२४३।)

"शिरःकपाली ध्वजवान् भैक्षाशी कर्म्म वेदयन्।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्।"

---

* म्लेच्छेनाधिगताशूद्रा अकामाद्वा कथञ्चन।
कृच्छ्रत्रयं प्रकुर्व्वीत ज्ञानात् द्विगुणं भवेत्॥ ख।

तथाच **मनुः**—( ११।७२ )

"ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्।
भैक्षाश्यात्म-विशुद्ध्यर्थं कृत्वा शव-शिरो-ध्वजम्॥" इति॥

अत्रच द्वादशवर्षब्रह्मचर्य्यवनवासादेरतिकष्टत्वात् इतिकर्त्तव्यताबाहुल्याच्च प्राजापत्येचोपवासत्रयेपि गृहावस्थानादितिकर्त्तव्यताबाहुल्याभावाच्च अविगीता**नादिशिष्टाचार**-दर्शनाच्च यथोक्तद्वादशवार्षिकव्रतस्य द्वादशवार्षिक प्राजापत्यव्रततुल्यत्वमेव।

प्राजापत्यव्रतं द्वादसाह-साध्यम्। **तथाच मनुः**—( ११। २१२ )

"त्र्यहं प्रातस्त्र्यहंसायं त्र्यह मद्यादयाचितम्।
त्र्यहं परन्तु * नाश्नीयात् प्राजापत्य-विधिः स्मृतः॥" इति॥

अनेन द्वादशवर्षैः षष्ट्यधिकशतत्रय-प्राजापत्यानि भवन्ति।
प्राजापत्यव्रताशक्तौच धेनुदानं विहितम्।

तथाच **मार्कण्डेयः**—

"प्राजापत्य-व्रताशक्तौ धेनुं दद्या द्विचक्षणः †।
धेनोरभावे दातव्यं तुल्यं मूल्यं नसंशयः॥"

तेन द्वादशवार्षिकव्रतोपदेशे षष्ट्यधिक-शतत्रय-धेनवो भवन्ति।

ब्रह्मवधित्वञ्च सप्तविधमुक्तम्। तत्राज्ञानतः साक्षाद्ब्रह्मवधे यथोक्तं द्वादशवार्षिक मेव प्रायश्चित्तम्। इतरेषान्तु यद्यपि शृङ्गग्राहिकतया साक्षाद्वचनन्नास्ति तथापि

"योभूय आरभते तस्मिन् फले विशेष" इत्या**पस्तम्ब**-वचनात् द्वादशवार्षिक-सार्द्धदशवार्षिक-नववार्षिक-सार्द्धसप्तवार्षिकषाड़्वार्षिक-सार्द्धचतुर्व्वार्षिकत्रैवार्षिक-प्रायश्चित्त-प्रतिपादकवचन-दर्शनाच्च साक्षाद्ब्रह्म-वधविषयद्वादशवार्षिकप्रायश्चित्तापचये कर्तव्ये

"समंस्यादश्रुतत्वात्" इतिन्यायेनाष्टमाष्टमभागापचयेनैव प्रायश्चित्तव्यवस्था भवति। तेनाप्रवृत्त-प्रवर्त्तकस्य प्रयोजकस्यानुग्राहकादिभ्यः सोत्कर्षत्वा दष्टमभागापचये सार्द्धदशवार्षिकं, वैमनस्यापादकस्यानुग्राहकस्य ‡ ततोऽपि

---

* त्र्यहं परञ्च। क।

† "धेनुं दद्यात् पयस्विनी" मिति तत्त्वादिसम्मतः पाठः।

‡ वैमनस्यापादकस्य। क।

किञ्चिदूनत्वान्नव-वार्षिकम् । प्रवृत्तोत्साहजनकस्य प्रयोजकस्य ततोऽपि न्यूनत्वात् सार्द्धसप्तवार्षिकम् । वध्यस्यानुग्राहकान्तरव्युदासकस्यानुग्राहकस्य ततोऽपिन्यूनत्वात् षड् वार्षिकम् । अनुमन्तुस्त्वानुमतिदानेन ततोऽपि न्यूनत्वात् सार्द्धचतुर्व्वार्षिकम् । निमित्तिनस्तु ततोऽपि न्यूनत्वात् त्रैवार्षिकम् । तत्राप्ययं वाचनिको विशेषः तथाच भविष्यपुराणे

कार्त्तिकेय उवाच—

"यमुद्दिश्य द्विजं हन्याद् ब्राह्मणः स्वयमेवहि ।
आत्मानं सहसा क्रोधात् तस्य किं भवति प्रभो ॥
सम्बन्धेन विना देव शुष्कवादेन कोपितः ।
अनिच्छतो मृते विप्रे विषादिभिर्गणाधिप ॥

ईश्वर उवाच—

केशश्मश्रुनखानाञ्च * कृत्वानिर्व्वपनं गुह ।
ब्रह्मचर्य्यं चरन्धीरो वर्षेणैकेन शुध्यति ॥
ससम्बन्धं † यदा विप्रो हत्वात्मानं मृतोगुह ।
निर्गुणं सहसा क्रोधाद् गृहच्चेत्रादिकं प्रति ॥
त्रैवार्षिकं व्रतं कुर्य्याद् ब्रह्मचर्य्यं चरन्नपि ॥"

एतेन यदङ्गिरसोक्तम्—

"षड्भिर्व्वर्षैः कृच्छ्रचारी ब्रह्महापूयते नरः ॥"

तथा— "महापातक-संयुक्ता वर्षैःशुध्यन्ति ते त्रिभिः ॥" इति तदपियथोक्तविषयमेव द्रष्टव्यम् ।

एतच्च मूलभूतद्वादशवार्षिक-प्रायश्चित्तस्याज्ञान-निवन्धनत्वात्तदष्टमाष्टमभाग-हानिव्यवस्थया प्रायश्चित्तं प्रयोजकादीनामपि अज्ञानत एव द्रष्टव्यम् ।

"प्रायश्चित्त मकामानां कामान्नाप्नोति मानवः ।
विहितं यदकामानां कामात्तद्द्विगुणं स्मृतम् ॥"

इत्यङ्गिरोवचनात् ज्ञानकामनयोश्चाव्यभिचाराद् ज्ञानाद्द्वैगुण्यमेव । (एतेनप्रयोजकादीनामपि ), प्रयोजकादयो ये षट् तेषामपि प्रयोजकादिविहित-

* नखादीनां । ख ।

† सम्बन्धेन । क । परन्तु कपुस्तकेऽपि "ससम्बन्धं" इति पाठ आसीत् । पश्चात् "सम्बन्धेन" इत्येवं कृतः ।

मूलभूतप्रायश्चित्ताष्टमाष्टमभागहानिव्यवस्थया प्रायश्चित्त मूहनीय मिति। एतच्च ब्राह्मणमात्रविषयम्।

पितृ-मातृ-सोदरभ्रात्राचार्य्य-श्रोत्रियाहिताग्नीनां षण्णां अज्ञानतः प्रत्येक-वधे तु द्वादशवार्षिकं कृत्वा न निवर्त्तितव्यं किन्तु यावज्जीवनमेव व्रत * माचरणीयम्।

तथाच **भविष्यपुराणम्**—

"मातरं पितरं हत्वा सोदर्य्यं भ्रातरं तथा।
गुरुं हत्वा श्रोत्रियञ्च आहिताग्निमथापिवा।
आउत्तमा दुच्छ्वासाद् † व्रतं चीर्त्वा ‡ विशुध्यति।

अत्र § धेनुसङ्कलनायां जीवनकालस्यानियतत्वाद्विंशत्युत्तरं शतं परमायुरेव ग्राह्यम्। तेन द्वादशवार्षिकं कृत्वा वधकालादूर्द्ध्वं विंशत्यधिकशतस्य यावदवशिष्टं तावत् परिमाणद्वादशवार्षिकव्रतानुरूपा धेनवो दातव्याः।

यत्तु **याज्ञवल्क्येनोक्तम्**— (३। अ। २५२)

"द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमादिशेत।" इति

तत्राहिताग्निपदेनैव यजमानस्योपादानात् सवनस्थपदं ** ऋत्विग्विषयं द्रष्टव्यम्।

**यत्तु शङ्ख-लिखित-वचनम्**—

"पूर्व्ववदमतिपूर्व्वं चतुर्षु वर्णेषु प्रमाप्य †† द्वादशसंवत्सरान् षट् त्रीन् सार्द्ध-संवत्सरान् व्रतान्यादिशेत् तेषामन्ते गो-सहस्रं ततोऽर्द्धं तस्यार्द्धं ततोऽर्द्धञ्च दद्यात्, सर्व्वेषामानुपूर्व्व्येणेति।" तद् यथाक्रमं चातुर्व्वर्ण्यपुत्रपितृव्य-विषयं मातुल-विषयञ्च। चतुर्षुवर्णेष्विति हन्तव्य-निर्द्देशः। सर्व्वेषामानुपूर्व्व्येणेति-पुनरुपादानसामर्थ्येन हन्तृ-निर्द्देशः। तेनायमर्थो भवति।—ब्राह्मणः पुत्रं पितृव्यं मातुलञ्च हत्वा द्वादशवार्षिकान्ते गोसहस्रं दद्यात्। क्षत्रियस्तु षाड़वार्षिकान्ते गवां पञ्चशतं दद्यात्। वैश्य स्त्रैवार्षिकान्ते सार्द्धगोशतद्वयं दद्यात्। शूद्रः सार्द्धवार्षिकान्ते सपादगोशतं दद्यात्।

---

* तद्व्रत। ख।

† आउत्तमात्तथोच्छ्वासाद। ख।

‡ व्रतं चीर्त्वा। क।

§ तथाच। ख।

** वचनपूर्व्वार्द्धन्तु—"चरेद् व्रत महत्वापि घातार्थं चेत् समागतः॥ इति॥

†† प्रमार्य्यं। ख।

यत्तु **मध्यमाङ्गिरसोक्तम्**—

"गवां सहस्रं विधिवत् पात्रेभ्यः प्रतिपादयेत्।
ब्रह्महा विप्रमुच्येत सर्व्वपापेभ्य एव च॥" इति।

तत् पितृव्यपुत्रादिसपिण्ड-विषयं आत्म-बान्धव-विषयञ्च।

आत्म-बान्धवाश्चोक्ताः—

"आत्म-मातुः स्वसुः पुत्रा आत्म-पितुः स्वसुः सुताः।
आत्म-मातुल-पुत्राश्च विज्ञेया आत्म-बान्धवाः॥" इति।

एतेन यथायथासम्बन्धोत्कर्षो भवति तथातथा द्वादशवार्षिकादधिकं * प्रायश्चित्त मूहनीयम्। एतच्च सर्व्वमज्ञानतः साक्षाद्वधे। प्रयोजकादीनान्तु यथोक्ताष्टमभागहानिर्द्रष्टव्या। ज्ञानतस्तुद्वैगुण्यमिति। जातिमात्रपतित-ब्राह्मणवधेतु कामतोऽपि न मरणान्तिकं किन्तु द्वादशवार्षिकमेव। तथाच **भविष्यपुराणम्**—

"जातिमात्रे हते विप्रे कामतो यद्भवेत् शृणु।
चरेद् द्वादशवर्षाणि कृत्वा शव-शिरोध्वजम्॥" इति।

अज्ञानत स्तदर्द्धमिति।

इदानीं वध-प्रवृत्तस्य वधानुत्पादे प्रायश्चित्तं निरूप्यते।

तत्र † **गौतमः**—

"सृष्टश्चेद् ब्राह्मण-वधे अहत्वापि व्रतञ्चरेत्।" इति।

इदञ्च ब्राह्मण-वधे प्रवृत्तौ ब्रह्मवध-प्रायश्चित्तातिदेशकं वचनम्।

तत्रापि निमित्तवधप्रायश्चित्तस्याल्पत्वा त्तदतिदेशकमेव। तेन यदि ब्राह्मणमारणाभिसन्धानच्चित्तेन काण्डादिना विद्धो ब्राह्मणः कदाचिज्जीवति तदा निमित्तवधोक्तं त्रैवार्षिकम्।

अथब्राह्मणमारणाभिसन्धिच्चित्तेन काण्डादिना दैववशा न्न विद्धोऽसौ तदालघुत्वात् "यौभूयआरभते तस्मिन् फले विशेषः" इति वचनानुसारात् निमित्तवधोक्तं वार्षिक मेव प्रायश्चित्तम्। अज्ञानत स्तदर्द्धम्।

**यत्त्वापस्तम्ब**-वचनम्—

"द्वादशरात्र मब्भक्षो द्वादशरात्रमुपवसेत्" इति।

* दधिकमेव। क।

† तथाच। ख।

तद्वधार्थं मानसमात्रप्रवृत्ताविति * द्रष्टव्यम्।

अत्र धेनु-सङ्कलनायां द्वादशाहोपवासेन धेनुद्वयं द्वादशाह-जलाहारेण षड़ुपवाससङ्कलनया एका धेनु रिति मिलित्वा धेनुत्रय मिति।

यदितु † वधाभिसन्धानं विनाऽपमान-हेतुना ताड़नाद्यर्थमुद्यमं करोति तदा प्राजापत्यम्। अथ वेदनार्थं ‡ लगुड़ादि-पातनमात्रं करोति तदाऽति-कृच्छ्रम्। अथ तत्रैव रक्तदर्शनं कृच्छ्रातिकृच्छ्रम्।

तथाच **मनुः**—(११। अ। २०८)

"अवगूर्य्य चरेत् कृच्छ्र मतिकृच्छ्रं निपातने।
कृच्छ्रातिकृच्छ्रं कुर्व्वीत विप्रस्योत्पाद्य शोणितम्॥"

कृच्छ्रं प्राजापत्यम्। तत्रैका धेनुः। अतिकृच्छ्रे धेनुद्वयम्।
कृच्छ्रातिकृच्छ्रे धेनु-चतुष्टयम्।

यत्तु **याज्ञवल्क्येनोक्तम्**—(३। अ। २५२)

"चरेद् व्रत महत्वाऽपि घातार्थं चेत् समागतः।" इति।

तद्‌यथोक्तानुग्राहक-विषय मेवेति। अतएव यदि क्रोधवशादात्म-वधार्थं जलाग्नि-प्रवेशं गल-पाशं विषभक्षणं देवकुलादिभ्यः प्रपतनं शस्त्रेणोदरादि-हननं कृत्वा § दैवाज्जीवति, तथापि "स्पृष्टस्चेद्‌ब्राह्मण-वधेऽहत्वाऽपी"त्यनेन न्यायेन प्रायश्चित्तं त्रैवार्षिकम्। यदितु जलाग्नि-प्रवेशगलपाशादिना मरणोद्यतस्यापि केनाऽपि प्रतिबन्धकेन जलाग्नि-प्रवेशादिकं न निष्पन्नं तत्र प्रायश्चित्त माह **यमः**—

"जलाग्न्युद्बन्धन-भ्रष्टाः प्रव्रज्यानाशकच्युताः।
विषप्रपतनप्रायः शस्त्र-घात-च्युताश्च ये॥
नवैते प्रत्यवसिताः सर्व्वलोक-वहिष्कृताः। **
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेनतु †॥"

अत्र निरुपपद-चान्द्रायण-शब्द-प्रयोगाद्‌वशिष्ठोक्तं चान्द्रायणं ग्राह्यम्।

---

* मानसमात्रप्रवृत्तावपि। क।

† यदातु। क।

‡ वेदनाहेतु। ख।

§ कृत्वैव। क।

** परलोकवहिष्कृताः। ख।          † द्वयेनचेति। ख।

तदाह वशिष्ठः—

"एकैकं वर्द्धयेत् पिन्डं शुक्ले कृष्णेच ह्रासयेत्।
अमावास्यां न भुञ्जीत एष चान्द्रायणो विधिः॥"

तदशक्तौ—"चान्द्रायणमकुर्व्वाणाः कुर्य्युः* कृच्छ्रचतुष्टय" मित्येत द्विषयम्। तेनात्र धेनुचतुष्टयम्। तप्तकृच्छ्रश्चात्र विषय-गौरवान्मनूक्तम्—(११।२२५)

"तप्तकृच्छ्रं चरण् विप्रो जलक्षीरघृतानिलान्।
प्रतित्र्यहं पिवेदुष्णान् सकृत्स्नायी समाहितः॥"

अत्र धेनुद्वयम्। तेनात्रतप्तकृच्छ्रद्वयचान्द्रायणाभ्यां अष्टौधेनवः। इति ब्राह्मणस्य ब्रह्मवध-प्रायश्चित्त-निरूपणम्।

इदानीं† क्षत्रियादीनां ब्रह्मवधप्रायश्चित्तं निरूप्यते। तत्र क्षत्रियादीनां ज्ञानतः साक्षाद् ब्रह्मवधे विशेषाश्रवणात् प्राणान्तिकमेव। इतरत्र तु यद् ब्राह्मणस्य ब्रह्मवधे प्रायश्चित्तं तत्क्षत्रियवैश्यशूद्राणां यथाक्रमं द्विगुणं त्रिगुणं चतुर्गुणमिति बोद्धव्यम्।

ननु "विप्रेतु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते‡॥"

इति बृहद्विष्णु वचनात् क्षत्रियवैश्यशूद्राणां पादपादह्रा(नि)रेवोचिता, कथं द्वैगुण्यादि ‡। मैवं साधारणोपदेशस्य ब्रह्मवधविषय-विशेषवचनेन वाधितत्वात्। तथाच ब्रह्मवध-प्रकरणे ऽङ्गिराः—

"परिषद् या ब्राह्मणानां राज्ञां सा द्विगुणास्मृता।
वैश्यानां त्रिगुणा प्रोक्ता शूद्राणान्तु चतुर्गुणा॥
परिषद्वद् व्रतं प्रोक्तं शुद्धये पापकर्म्मणाम्॥" इति।

अस्यार्थः—यावद्भि र्ब्राह्मणै र्ब्राह्मणस्य परिषत् ततो द्विगुणैः क्षत्रियैः क्षत्रियस्य, त्रिगुणै र्वैश्यै र्वैश्यस्य, चतुर्गुणैः शूद्रैः शूद्रस्य, परिषद्वच्च पापक्षयहेतु-व्रत मुक्तम्। तेन क्षत्रियवैश्यशुद्राणां ब्रह्मवधे यथाक्रमं द्वैगुण्यं त्रैगुण्यं चातुर्गुण्यं मिति।

---

* चान्द्रायण मकुलातु कुर्य्यात्। क।

† अथ। ख।

‡ शूद्रजातौ प्रशस्यते। ख।

‡ द्वैगुण्यं त्रैगुण्यं चातुर्गुण्य मिति। ख।

तथाच भविष्यपुराणम्।—

"अधमानान्तु वर्णाना मुत्कृष्ट-हनने गुरु।
दोषोगुरुतरो ज्ञेयः क्षत्रादीनां नसंशयः॥" इति

किञ्च यत्र याज्ञवल्क्यादिभिः शूद्रवैश्यक्षत्रिये ब्राह्मणस्य विरुद्ध-वादे कृते यथाक्रमं चतुर्गुण-त्रिगुण-द्विगुणदण्डानुशासनं कृतं, तत्र ब्राह्मण-वधे ब्राह्मण—प्रायश्चित्तात् क्षत्रियादीनां प्रायश्चित्तस्य पादपादहानिरिति नेदमौचित्यप्राप्तम्।

तथाच याज्ञवल्क्यः—(२।अ।२०७)

"प्रातिलोम्यापवादेषु चतुस्त्रिद्विगुणादमाः।
वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः॥"

तेन यथोक्तमेव क्षत्रियादीनां प्रायश्चित्त मिति।

अत्र सर्व्वत्रैव वयोऽवस्थादिवशेनापि प्रायश्चित्त-ह्रासो द्रष्टव्यः।

तदुक्तम्—

"अशीति र्यस्य वर्षाणि बालोवाऽप्यूनषोड़शः।
प्रायश्चित्तार्द्धं मर्हन्ति स्त्रियो रोगिण एवच॥"

अत्रैकादशादूर्द्ध्वं षोड़शवर्षपर्य्यन्तं बालो द्रष्टव्यः।

यत्तु बृहद्विष्णुनोक्तम्—

"स्त्रीणा मर्द्धं प्रदातव्यं वृद्धानां रोगिणां तथा।
पादो बाले प्रदातव्यः सर्व्वपापेष्वयं विधिः॥" इति

तत् पाद-प्रायश्चित्तं पञ्चवर्षा दूर्द्ध मेकादशवर्षपर्य्यन्तम्,

"जाति-शक्ति-गुणापेक्षं सकृद्बुद्धिकृतन्तथे"ति

वचनानुसारेण योजनीयम्। तथाभूतस्यैव स्वयमसामर्थ्ये तदीयभ्रात्रादिभि रपि प्रायश्चित्त माचरणीयम्। तदर्थंप्रायश्चित्तानुष्ठानोपदेशात् पञ्चवर्षन्यूनस्य प्रायश्चित्ताभाव एवेति।

तदुक्तम्—

"ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च।
प्रायश्चित्तं चरेद् भ्राता पितावाऽन्यः सुहृज्जनः॥
ततोन्यूनतरस्यास्य नापराधो न पातकम्।
न चास्य राजदण्डोऽस्ति प्रायश्चित्तं न विद्यते॥" इति।

इदानी मनेक-ब्रह्मवधेषु किं माहत्त * प्रायश्चित्तानुष्ठानं अथ तन्त्रेण सकृ द्वेतिनिरूप्यते। तत्रावृत्त मेव प्रायश्चित्तानुष्ठान मुचितम्।

तथाच देवलः—

यत्स्यादनभिसन्धाय पापं कर्म्म सकृत् कृतम्।
तस्येयं निष्कृतिः प्रोक्ता धर्म्म-विद्भि र्मनीषिभिः॥
विधिः प्राथमिका दस्मात् द्वितीये द्विगुणं स्मृतम्।
तृतीये त्रिगुणं प्रोक्तं चतुर्थे नास्ति निष्कृतिः॥" इति।

**गौतमोऽप्याह—**

"एनसि गुरुणि गुरूणि लघुणि लघूणि" इति।

तेन ब्रह्मवध-संख्या-परिमितान्येव प्रायश्चित्तान्यनुष्ठेयानीति।

तदयुक्तम्, तुल्यरूपाणां ब्रह्मवधानां तन्त्रेण सकृत्प्रायश्चित्तानुष्ठानादेव सकल-पापक्षय-सिद्धेः पुनरनुष्ठान-वैयर्थ्यात्।

नन्वेक-प्रयोगविधि-गृहीतानां तन्त्रेणानुष्ठानं सम्भवति, यथा प्रयाजादीना माग्नेयादित्रितयोपकारकानां तन्त्रेण सकृदनुष्ठानम्, न चेहानेक-तुल्यरूप-प्रायश्चित्ताना मेक-प्रयोगविध्युपसंग्रहोऽस्ति, इति कथं तन्त्रम्? नैवं नह्येक-प्रयोगविध्युपसंग्रहः तन्त्रत्वे कारणं किन्तर्हि समानदेशकालकर्तृत्वेनागृह्यमाण-विशेषत्वम्। तत्राङ्गानां तन्त्रत्वे एकप्रयोगविध्युपसंग्रहादेव, प्रायश्चित्तानान्तु प्रधानानां समानरूपानां समानदेशकालकर्तृत्वेनागृह्यमाणविशेषत्वस्य स्वभावा-देवोपस्थितत्वात् † किमिति तन्त्रानुष्ठानेन न भवितव्यम्।

नन्वेकस्य प्रधानानुष्ठानस्य युगपदनेकफलत्वं योगसिद्ध्यधिकरणविरुद्धम्। तत् कथमेकप्रायश्चित्तानुष्ठानस्य युगपदनेकफलत्वं ‡ भविष्यति? नैवं योग-सिद्ध्यधिकरणसिद्धान्तापरिज्ञानात्। तत्रहि पृथगनुष्ठानसाध्यान्येव फलानि "एकैकस्मैवा कामाय अन्ये यज्ञक्रतव इति संकीर्त्त्य "सर्व्वेभ्यो दर्शपौर्णमासा" वितिप्रयोग-दर्शनात् तत्र भवतु पृथगनुष्ठान-साध्यत्वं, इहतु तथाभूतपृथगनुष्ठान-साध्यत्वप्रतिपादक-वचनाभावात् अनेकफलानाञ्च तन्त्रेण दशहरान्यायेन §

---

* आवृत्त्या। क।

† प्रायश्चित्त-स्वभावादेवोपस्थितत्वात्। ख।

‡ युगपदनेकपापक्षयकर्तृत्वं। ख।

§ यथा दशजन्मार्ज्जितदशविधपापक्षयाश्वमेधायुतफलप्राप्तिः सकृद्दशहरागङ्गास्नानात् तद्वदित्यर्थः।

एककामना-विषयत्वसम्भवात् तन्त्रत्वमेवेति। नचैव मनेकप्रयोगसाध्यानां षष्टिवर्षाद्युपभोग्य-सजातीयानेकफलाना मेकस्मात् तन्त्रानुष्ठितज्योतिष्टोमादि-प्रयोगात् एकदैव सकलनिष्पत्ति-सम्भवात् पुनरनुष्ठानं नस्यादिति "कर्म्मण्यारम्भाधि करणसिद्धान्त-विरोध इति वाच्यं, यतो भवेदेव * यदि संख्यावच्छिन्न-फलश्रुतिविरोधो न भवेत्। तथाहि यद्येकस्मिन् प्रयोगे षष्टिवर्षभोग्यान्यनेकानि फलानि भवेयुः तदा षष्टिवर्षभोग्यफलमेव न स्यात्। श्रूयते चेत्तेनावगम्यते † प्रयोगभेदादेव फलभेदसिद्धिरिति।

यत्तु **देवलवचनम्**—"विधेः प्राथमिकादिति" न तदावृत्तानुष्ठानप्रतिपादनार्थं किन्तर्हि द्विगुणत्रिगुणप्रायश्चित्ताभिधानद्वारेण परापरपापहेत्वनुष्ठानानां ‡ अधिकपापजनकतया निन्दार्थमेव। तथाचोक्तं "चतुर्थे नास्ति निष्कृति"रिति। न च परमार्थतः चतुर्थे निष्कृत्यभावः महापातकिना सहयानासनादि-संसर्गानां संवत्सरपर्य्यन्तानुष्ठानेऽपि द्वादशवार्षिकस्य वक्ष्यमाणत्वात्। कामतोऽपि ब्रह्मवधेप्राणान्तिकाया निष्कृते रुक्तत्वात्, अतोनिन्दार्थवादएवायम् §।

यत्रत्वेकस्मिन्नेव विषये लघुगुरुगुरुतरप्रायश्चित्तानुष्ठानं तत्र लघुगुरुगुरुतर-प्रायश्चित्तं सकृदभ्यासात्यन्ताभ्यास-विषयमेव द्रष्टव्यम्। तथा * एकस्मिन्नेव चाण्डालान्न-भक्षणे **जैमिनिमध्यमाङ्गिरः स्वल्पयमै**र्यथाक्रमं चान्द्रायणं तप्तकृच्छ्रसहितचान्द्रायणं चान्द्रायण-द्वयञ्चाभिहितं तच्च सकृदभ्यासात्यन्ताभ्यास-विषयमेव। एतच्च सुरापानपरिच्छेदे वक्ष्यामः। एतदभिप्रायेणैव **गौतमे**नोक्तं—

"एनसिगुरुणिगुरूणि लघुणि लघूणीति"

यत्रतु विजातीयान्यव समान-प्रायश्चित्तानि (पापानि) † तत्र "विधेः प्राथमिकादस्मा"दित्यस्य वचनस्य सजातीयापेक्षत्वनानवकाशत्वात् तन्त्रत्वं निरपवादमेवेति। यथा शौण्डिक-चर्म्मकारपाषण्डि ‡ स्पर्शे सकृदाचमनं। एवं § तुल्यरूपपापेषु सजातीयेषु विजातीयेषुवा। महापापोद्देशेन द्वादशवार्षिकादि-

* भवेदयं। ख।

† श्रूयतेनावगम्यते। ख।

‡ परम्परापापहेत्वनुष्ठानानां। क।

§ अतोनायं विधिः किन्तु निन्दार्थवाद एवायम्। ख।

* यथा। ख।

† वन्धनीक्रोड़ीकृतः प्रतीकः क पुस्तके नास्ति।

‡ शौण्डिक-चर्म्मकार-पाषण्डस्पर्शे। क। § एवमतुल्यरूपपापेषु। क।

प्रायश्चित्तेष्वव्यवायानां "पशुपुरोडाशन्यायेन" प्रसङ्गादेव कार्य्यसिद्धेः न पृथक् प्रायश्चित्तानुष्ठान मिति क्षत्रियादि-कृत-ब्रह्मवध प्रायश्चित्तम्।

इदानीं क्षत्रियादिवध-प्रायश्चित्तं निरूप्यते।

तत्र यादृशी ब्रह्मवधे ब्राह्मणस्य यादृशं प्रायश्चित्तं तच्चतुर्थभागः क्षत्रियवधे अष्टमभागो वृत्तस्थवैश्यवधे षोड़शभागो वृत्तस्थशूद्रवधे।

तथाच मनुः—(११।१२६)

"तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधेस्मृतः।
वैश्येऽष्टमांशोवृत्तस्थे शूद्रे ज्ञेयस्तु षोड़शः॥" इति

अत्र "वृत्तस्थ"पदस्य समानविभक्तिकत्वा द्वैश्यशूद्रसम्बन्ध एव नतु षष्ठ्यन्त क्षत्रियसम्बन्ध इति।

वृत्तञ्चेदम्—

"गुरु-पूजा घृणा शौचं सत्यमिन्द्रिय-निग्रहः।
प्रवर्त्तनं हितानाञ्च तत्सर्व्वं वृत्तमुच्यते॥" इति।

अवृत्तस्थवैश्यवधेतु वार्षिकम्।

तथाच कात्यायनः—

"वर्षत्रयन्तु राजन्यं वैश्यमेकन्तु वत्सरम्।
हत्वा शूद्रन्तु षण्मासानेतदेवव्रतञ्चरेदिति॥"

यत्तु गौतमेनोक्तम्—

"शूद्रवधे संवत्सरं वृषभैकादशा गा दद्यात्।"

तद् ब्राह्मण-जातवृत्तस्थ-शूद्रविषयम्।

यच्च शङ्खेनोक्तम्—

"शूद्रवधे कृच्छ्राब्दं गोप्रदानम्॥"

तद्ब्राह्मण-जातशूद्रवधविषयम्।

यत्तु—"शूद्रघाती षण्मासान् गोमूत्रयावकाहारीगाम्दत्वा पूतोभवति" त्यापस्तम्बेन गोप्रदानाधिकं षाण्मासिकव्रत मुक्तं तत् क्षत्रियजात-शूद्रवध-विषयम्।

यत्तु **काश्यपवचनम्**—

"शूद्रे सान्तपनं तिलधेनुश्चेति॥"

तद्वैश्यजातशूद्रवध-विषयम्। तिलधेनुश्चात्र केवलतिलात्मिकैव द्रष्टव्या। नतु गुड़धेन्वादिद्वादशधेनुदानान्तर्निविष्टा, पापस्याल्पत्वेन तथाविधतिलधेनुदानस्यासम्भवात्। सान्तपनञ्च

**याज्ञवल्क्येनोक्तम्**—

"कुशोदकञ्च गोक्षीरं दधि-मूत्र-शकृद् घृतम्।
प्राश्यापरेद्युरुपवसेत् कृच्छ्रं सान्तपनं स्मृतम्॥"

अस्यायमर्थः—कुशोदक-गव्यक्षीरदधिघृतगोमूत्रगोमयान्येकीकृत्य एकस्मिन्नहनि पीत्वाऽपरस्मिन्नहन्युपवासः। एवं द्व्यहः साध्यं सान्तपनम्।

यच्च **सम्वर्त्तेनोक्तम्**—

"निपात्य क्षत्रियं मोहात् त्रिभिः कृच्छ्रैर्विशुध्यति।
वैश्यहत्यान्तु संप्राप्य कथञ्चिद्दैव-मोहितः॥
कृच्छ्रातिकृच्छ्रं कुर्व्वीत मानवो वैश्यघातकः।
मोहात् शूद्रवधं प्राप्य तप्तकृच्छ्रं समाचरेत्॥" इति।

तज्जातिमात्रहीनहीनतरक्षत्रियवैश्यशूद्र-वध-विषयम्। अत्र "कृच्छ्रै"रिति बहुवचनादेव कृच्छ्रत्रय-सिद्धेः त्रिभिरिति यदुपादानं तत् क्षत्रिय-वधे त्रिगुणप्राजापत्यत्रय-प्रतिपादनार्थम्। कृच्छ्रातिकृच्छ्रं **याज्ञवल्क्येनोक्तम्**—(३।३२०)

"कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम्।"

पयः पानीयम् "अब्भक्षः कृच्छ्रातिकृच्छ्रमिति।" गौतमवचनात्*

अत्र धेनु-चतुष्टयम्। तप्तकृच्छ्रन्तु **मनूक्तं** ग्राह्यम्—(११।२१४)

"तप्तकृच्छ्रं चरन् विप्रो जलक्षीर-घृतानिलान्।
प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः॥"

अत्र धेनुसङ्कलनया धेनुद्वयम्। एतत् सर्व्वमकामतः क्षत्रियादिवधविषयम्। कामतो ब्रह्मवधे प्रायश्चित्ताभावेन तदीयतुरीयभागाद्यसम्भवात् कामतस्तु क्षत्रियादिवधे—

"विहितं यदकामानां कामात्तद्विगुणं स्मृतम्॥"

---

*मिताक्षरायान्तु "कृच्छ्रातिकृच्छ्रः" इति पुलिङ्गनिर्देशः। परन्तु सूत्रसिद्धे "अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः" इत्येवं पठितम्।

इति द्विगुणमेव प्रायश्चित्तम्। तथाच **बृहद्धारीतः**—

"षड्वर्षाणि राजन्ये त्रीणि वैश्ये सार्द्धं शूद्रे॥" इति।

यत्तु **वशिष्ठेनोक्तम्**—

"राजन्यं हत्वाऽष्टौ वर्षाणि व्रतमाचरेत्।
षड् वैश्यं त्रीणि शूद्र मिति॥"

यच्च **गौतमेनोक्तम्**—

"राजन्य-वधे षाड्वार्षिकं ऋषभैकसहस्राश्च गा दद्यात् वैश्येत्रैवार्षिकं ऋषभैकशताश्च गा दद्यात् शूद्रे संवत्सरं ऋषभैकादशाश्च गा दद्यात्।" एवमादीनि नानामुनिवचनानि नानाविधप्रायश्चित्तोत्कर्ष-प्रतिपादकानि तानि ब्राह्मण-जात-वृत्तस्य-यागस्थषड़ङ्गवेदाध्ययनादिगुणयुक्त-कामाकामादिकृत क्षत्रियादिवध-विषयानि यथायोग्यं व्याख्येयानि। इदानीं तु तथाविध क्षत्रियाद्यभावेन * **व्यवहारानङ्गत्वात्** न प्रत्येकं विषय व्यवस्थया व्याख्याता नीति सर्व्वञ्चेदं ब्राह्मणस्य क्षत्रियादिवधप्रायश्चित्त मुक्तम्।

क्षत्रियस्य तु क्षत्रिय-वैश्य शूद्र-वधे ब्राह्मणस्य यत् क्षत्रियादिवधे प्रायश्चित्त मुक्तं तत्पादोनम् एवं वैश्यस्य क्षत्रियवैश्य-शूद्रवधे क्षत्रियादिवधे यद् ब्राह्मणस्य प्रायश्चित्तं तदर्द्धं प्रायश्चित्तम्। एवं शूद्रस्य क्षत्रिय-वैश्य-शूद्र-वधे ब्राह्मणस्य क्षत्रियादिवधे यत् प्रायश्चित्तं तदीयचतुर्थभागप्रायश्चित्तं साधारणवृहद्विष्णु-वचनाद् द्रष्टव्यम्।

तथाच **वृहद्विष्णु:**—

"विप्रेतु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते ‡॥

इति। नच

"अधमानान्तु वर्णाना मुत्कृष्टहनने गुरु।
दोषोगुरुतरोज्ञेयः क्षत्रादीनामसंशयः॥"

इति भविष्यपुराणवचनात् प्रातिलोम्येन वधे द्वैगुण्यादिकमितिवाच्यं ब्रह्मवध-प्रकरणे पठितत्वेन उत्कृष्टशब्दस्य ब्राह्मणमात्रपरत्वात् † पादोनादिविधाय-कस्यतु वचनस्य नानामुनिभि रनेकस्थानपठितत्वेन साधारणत्वात्।

---

* क्षत्रियाद्यभाव इति। ख।
‡ "विप्रेतु सकलं देय"मितिवचन मभक्ष्यभक्षणविषयमिति प्रायश्चित्तविवेकादयः।
† ब्राह्मणमात्रवचनत्वात्। क।

साधारणञ्चैतत् साक्षाद्वध-विषयम्—प्रयोजकादिषु पूर्ब्बवदष्टम-भागहानि व्यवस्थया प्रायश्चित्त मूहनीयमिति। तत्रापि स्त्रीवृद्धरोगूनषोड़शवर्षीयबालाना मर्द्धप्रायश्चित्तम्। पञ्चवर्षादूर्द्धमेकादशवर्षपर्य्यन्तं पादमात्रं द्रष्टव्यम्। इति क्षत्रियादिवध-प्रायश्चित्तम्।

इदानीं स्त्रीवधप्रायश्चित्तं निरूप्यते। तत्र **याज्ञवल्क्यः**—(३।२।३६)

स्त्रीशूद्रविट्क्षत्र-वधोनास्तिक्य ञ्चोपपातकम्" * इति।

तत्र यद्यपि प्रमाणान्तरप्राप्तब्राह्मणहननानुवादादुद्देश्यस्यब्राह्मणस्य लिङ्ग मविवक्षित मिति ब्राह्मणीवधस्यापि महापातकत्वं न्यायतः प्राप्नोति तथापि शूद्रादिभ्यः पृथक् स्त्रीशब्दोपादानात् ब्राह्मणीवधस्य वचनादेवोपपातकत्वमिति। तत्र प्रायश्चित्त माह **वशिष्ठ :**—

"ब्राह्मणीं चात्रेयीं हत्वा भ्रूणहत्यावत् प्रायश्चित्तम्।" इति।

भ्रूणहत्या ब्रह्महत्या, यथोक्तं तेनैव।—

ब्राह्मणं हत्वा भ्रूणहा भवति अविज्ञातञ्च गर्भम्।" इति।

अत्र स्त्री-वधस्य महापातक-मध्य-गणनाभावान्महापातकत्वाभावेन मरणान्तिकस्यातिदेशायोग्यत्वात् कामतोऽपि स्त्री-वधे प्रथमोक्तस्य द्वादशवार्षिकस्यैवाय मतिदेश इति। आत्रेयीच रजोयोगात् प्रभृति षोड़शदिन-पर्य्यन्तम्। तथाच **वशिष्ठ :**—

"रजस्वला मृतुस्नाता मात्रेयीं चाहु स्त्रयोदशाहानि।"

अस्याय मर्थः—यथा रजस्वलात्रेयी तथा ऋतुस्नाताऽपि त्रयोदशदिन-पर्य्यन्त मात्रेयी तेन षोड़शदिनान्येवायाति। एतेन क्षत्रियावैश्याशूद्राणा मप्यात्रेयीणां वधे यथाक्रमं क्षत्रियादिपुरुषवधप्रायश्चित्त मेव द्रष्टव्यम्।

तथाच **याज्ञवल्क्य :**—(३।२।५१)

"यागस्थ-क्षत्र-विट्-घाति चरेद् ब्रह्म-हनो व्रतम्।
गर्भहा च यथावर्णं तथात्रेयी-निसूदकः।" † इति॥

---

* "स्त्री-शूद्रविट्क्षत्रवधो निन्दितार्थोपजीवनम्।
नास्तिक्यं व्रतलोपश्च सुतानाञ्चैव विक्रयः॥"
इति मिताक्षरासम्मतः पाठः।

† "यागस्थ-क्षत्र-विट्-घाती" इति मिताक्षरासम्मतः पाठः।

**तथाच मनुः**—( ११।८८ )

"हत्वागर्भ मविज्ञात मेतदेवव्रतञ्चरेत् ।
राजन्यवैश्यौ चेजाना * वात्रेयी † मेवच स्त्रियम् ॥" इति ।

अत्र "हत्वागर्भ" मित्येतावतैवोपपत्तौ यदविज्ञातपदं तेनाविज्ञातपुंस्त्रीरूप-गर्भवधे कामतोऽपि द्वादशवार्षिक मेवेत्यभिप्रेतम् । यदितु केनाप्यव्यभिचारिणा लिङ्गेन पुंस्त्वेन विज्ञातो भवति पश्चादपि संवदति तदा मरणान्तिकमेव । अथ स्त्रीत्वेन विज्ञातो भवति तदा वक्ष्यमाणस्त्रीवधोक्तमेव प्रायश्चित्त मिति । तेन कामतोऽपि यथाविध्युत्पन्नाविज्ञातब्राह्मणीगर्भवधे ब्रह्मवधप्रायश्चित्तं द्वादश-वार्षिकमेव । एवं क्षत्रियागर्भवधे क्षत्रियवधोक्तं त्रैवार्षिकमेव । वैश्यागर्भवधे वैश्यवधोक्तं वार्षिक मेव । शूद्रागर्भवधे शूद्रवधोक्तं षान्मासिकमेव प्रायश्चित्तं द्रष्टव्यम् ।

तथाहिताग्नेर्ब्राह्मणस्य या सर्व्वाकारेणानिन्दिता पत्नी तद्वधेऽपि ज्ञानतो द्वादशवार्षिकमेव । **तथाचाङ्गिराः**—

"आहिताग्ने र्ब्राह्मणस्य हत्वा पत्नी मनिन्दिताम् ।
ब्रह्महत्याव्रतं कुर्य्या दात्रेयीघ्न तथैव च ॥"

तथा न्यूनगुणाऽपि या यागेष्वाप्रियमाणा धर्म्मपत्नी तद्वधेऽपि ज्ञानतो द्वादश-वार्षिक मेव । तथाच **पराशरः**—(                )

"सवनस्थां स्त्रियं हत्वा चरेद् ब्रह्महनोव्रतम् ।" इति ।

एवमाहिताग्नेः क्षत्रियस्य वैश्यस्यच या सर्व्वाकारेणानिन्दिता पत्नी न्यून-गुणाऽपि या यागे ष्वाप्रियमाणा धर्म्मपत्नी तद्वधेऽपि यथाक्रमं क्षत्रियवैश्यवधोक्त-मेव प्रायश्चित्त मूहनीय मिति ।

---

* इजानौ यजमानौ ।......प्रारब्ध-सोमपानयो रेषविधिः न दर्शपौर्णमासादि-यज मानयो रिति मेधातिथिः । इजानौ सोमेन इति सर्व्वज्ञनारायणः ।

† सप्तटीकोपेतमुद्रितमनुसंहितायां "हत्वागर्भ मविज्ञात" मितिवचनात् परं जन्मप्रभृतिसंस्कारैः संस्कृता मन्त्रवाचया । गर्भिणीत्वयवास्यात्तामात्रेयीं च विदुर्बुधाः ॥" इ"त्यात्रेयी" लक्षणं वन्धनीक्रोड़ीकृतं दृश्यते । "आत्रेयीं" स्त्रियमविगोत्रजातामिति मेधातिथिः । "आत्रेयी" च रजस्वला ऋतुस्नातोच्यते रजस्वलां ऋतुस्नाता "मात्रेयी" मिति वशिष्ठस्मरणादिति कुल्लूकभट्टः । "आत्रेयीं" अविगोत्रां रजस्वलां च । तथाहि "ऋतुमती मात्रेयी माहुरिति गौतमः" । अविगोत्रां वा नारीमिति विष्णुः । साच ब्राह्मण्येव "आत्रेयी" ब्राह्मणी मिति शङ्खस्मृतेः । इति सर्व्वज्ञ नारायणः ।

प्रायश्चित्तविवेके आत्रेयी चाविगोत्रजा ऋतुस्नाता चोच्यते । यत्र यद्वर्णात्रेयी तत्र तद्वर्णवधोक्तं प्रायश्चित्तं कर्त्तव्यमिति व्यवस्थापितम् ।

एतेन सपत्नी-मातृ-दुहितृ-भगिनी-स्नुषा-पत्नीनामपि सम्बन्ध-सन्निकर्ष-विशेषेणाहिताग्नि-पत्नीवदभ्यर्हितत्वात् साक्षाद्वधेऽपि ज्ञानतः द्वादशवार्षिकमेव।

एवं सपत्नभगिनी-पितृस्वसृमातृस्वसृमातुलानी-पितृव्य-भार्य्याभ्रातृस्त्रीणां विप्रकृष्टत्वात् ततोन्यूनं नववार्षिकमेव। ततोऽपिविप्रकृष्टस्त्रीणां सपिण्डगोत्रस्त्रीणा मपि वधे सम्बन्ध-सन्निकर्षविप्रकर्ष मपेक्ष्याष्टवार्षिकसप्तवार्षिकाद्यूहनीय मिति। सर्व्वत्राज्ञानतस्तदर्द्धम्। प्रयोजकादीनान्त्वत्रापि पूर्व्ववदेवाष्टमाष्टमभाग-हानिक्रमेण प्रायश्चित्त-व्यवस्थोहनीया।

इतर-ब्राह्मणी-वधेतु कामतः क्षत्रिय-वधोक्तं षड्वार्षिकम्। क्षत्रियावधेतु कामतो वैश्यवधोक्तं त्रैवार्षिकम्। वैश्यावधेतु कामतः शूद्रवधोक्तं सार्द्धवार्षिकम्। शूद्रावधेतु शूद्रवधोक्तार्द्धं पादोनवार्षिकं प्रायश्चित्तम्। एतच्च कामतः क्षत्रियादि-वध-प्रायश्चित्तं कामतो ब्राह्मण्यादि-वध-विषयमेव। अकामतो ब्राह्मण्यादिवध-प्रायश्चित्तं अकामतः क्षत्रियादिवधप्रायश्चित्तवत् त्रैवार्षिकं सार्द्धवार्षिकं नवमासिकं सार्द्धचातुर्म्मासिक मवगन्तव्यम् *।

तथाच **भविष्यपुराणम्**—

"राजन्यवद् ब्राह्मणीन्तु राजन्याञ्चैव वैश्यवत्।
वैश्याञ्च शूद्रवच्छूद्रां शूद्रार्द्धेन विधानवित्॥"

तथा **हारीतेनाप्युक्तम्**—

"क्षत्रियवद् ब्राह्मणीषु वैश्यवत् क्षतियासु च।
शूद्रवच्चापि वैश्यासु शूद्रासु शूद्रार्द्धेनेति॥"

यत्तु **वशिष्ठेनोक्तम्**—

"शूद्रां हत्वा संवत्सरं प्राकृतं ब्रह्मचर्य्यं चरेत्।" इति

तदत्यन्तगुणवद्-ब्राह्मण-जनित-शूद्रावधविषय मिति।

इदानीं व्यभिचारिणी-स्त्रीवध-प्रायश्चित्तं निरूप्यते †।

तत्र सकृत्सवर्णव्यभिचरितस्त्रीवध-प्रायश्चित्तमाह **याज्ञवल्क्यः** (३।२६८)।

"अप्रदुष्टां स्त्रियं हत्वा शूद्र-हत्या-व्रतञ्चरेत्।"

अस्यार्थः—अप्रदुष्टां अप्रकर्षेण दुष्टां सकृत्सवर्ण-व्यभिचरिता मित्यर्थः। नत्वदुष्टां अदुष्टस्त्रीवधप्रायश्चित्तस्य बहुतरस्योक्तत्वात्। तेन सकृत्सवर्ण-

* नवमासिकं षाण्मासिकमेव द्रष्टव्यं। क।

† सवर्णव्यभिचरित-स्त्रीवधप्रायश्चित्तं निरूप्यते। क।

व्यभिचरितब्राह्मणी-वधेऽकामतो ब्राह्मणजातशूद्रवधोक्तं गोप्रदानाधिकं वार्षिकं प्रायश्चित्तम् ।

तथा सकृत्सवर्णव्यभिचरित—क्षत्रिया-वधे ऽकामतः क्षत्रियजातशूद्रवधोक्तं धेनुत्रयाधिकं षाण्मासिकं प्रायश्चित्तम् ।

तथा सकृत्—सवर्णव्यभिचरितवैश्यावधे ऽकामतो वैश्यजातशूद्रवधोक्तं सान्तपनपूर्व्वकं तिलधेनुदानं प्रायश्चित्तम् ।

तथा सकृत्—सवर्णव्यभिचरितशूद्रावधे ऽकामतो हीनशूद्रवधोक्तं तप्तकृच्छ्रं प्रायश्चित्तं द्रष्टव्यम् । कामतस्तु सर्व्वत्रैव द्वैगुण्यमिति ।

यद्यपि स्त्रीत्वाद्व्यभिचरितत्वाच्च प्रायश्चित्तह्रासोऽत्यन्तं युज्यते, तथापि गुणवतीनां सकृत् सर्व्वर्णव्यभिचरितत्वे सति इमानि प्रायश्चित्तानि निर्गुणानामभ्यासेन सवर्णव्यभिचरितानां प्रायश्चित्तह्रासोऽप्यूहनीय इति । एतत् सर्व्वमुत्तमवर्ण-व्यभिचरित-स्त्रीणां वधेऽपि द्रष्टव्यमिति ।

इदानीं प्रातिलोम्येन व्यभिचरित-स्त्रीणां वधे प्रातिलोम्येन जातानां पुरुषाणाञ्च वधे समानत्वादेकत्रैव प्रायश्चित्तं निरूप्यते ।

तत्र ब्रह्मगर्भः—

"स्त्रीणामासां वधे ज्ञेया ऽनन्तरप्रभवेषु च * ।
प्रातिलोम्येनजातना मशूद्रत्वे चतुर्द्विषड् ॥" इति ।

अत्र प्रातिलोम्येनजातसमभिव्याहारात् स्त्रीणामपि प्रातिलोम्येन व्यभिचरिताणां वधे प्रायश्चित्तम् । अत्राशूद्रत्वे चतुर्द्विषड़िति यथाक्रमासम्भवात् यथायोग्य-सम्बन्ध एव योजनीयः । † अशूद्रत्व इति अन्त्यजत्वे ‡ सतीत्यर्थः । तेनाय मर्थोभवति । प्रातिलोम्येन व्यभिचरितानां स्त्रीणां वधे प्रातिलोम्येन जातानां पुरुषाणा ञ्च वधे चतु-र्द्वि-षण्मासा एव यथा योग्यं व्रतसम्बन्धिनः शुद्धिहेतवः न वर्षाणि । तेन क्षत्रियव्यभिचरित-ब्राह्मणी-वधे षाण्मासिकं प्रायश्चित्तम् ।

वैश्यव्यभिचरित-ब्राह्मणीवधे चातुर्म्मासिकम् । शूद्रव्यभिचरित-ब्राह्मणीवधे द्वैमासिकम् ।

---

* अन्तरप्रभवेषु च । क ।

† यथायोग्योऽन्वयो दर्शनीयः । ख ।

‡ अशूद्रत्वे ऽन्त्यजत्वे सतीत्यर्थः ।

तथा वैश्यव्यभिचरित-क्षत्रियावधे पादोनं षाण्मासिकम्। शूद्रव्यभिचरित क्षत्रियावधे त्रैमासिकम्।

तथा शूद्र-व्यभिचरित-वैश्यावधे सार्द्धमासिकं व्रत मित्यूहनीयम्।

इत्थमेव प्रातिलोम्येन सङ्कर-जातानामपिवधे प्रायश्चित्तं योजनीयमिति।

यत्तु **याज्ञवल्क्येनोक्तम्** - (३।२६८)

"दुर्वृत्ता ब्रह्म-क्षत्र-विट्-शूद्रयोषाः प्रमाप्यतु।
दृतिं धनु र्वस्त * मविं क्रमाद्दद्या द्विशुद्धये॥" इति।

तत् तु प्रातिलोम्येनात्यन्ताभ्यासेन व्यभिचरितानां ब्राह्मणी-क्षत्रिया-वैश्या-शूद्राणां वधे यथाक्रमं चर्म्म-धणुर्व्वस्त्र-मेषदानं † योजनीय मिति। एतच्च प्रायश्चित्ताल्पत्वा दकामतः कामतो द्वैगुण्य मिति।

यत्तु **लोकाक्षि-वचनम्**—

"द्वादश षट् त्रीण्येकं च मासाः स्त्रीणां वधे स्मृताः।" इति।

तद्यथाक्रमं पतित-सवर्णपरिणीत-ब्राह्मणी-क्षत्रिया-वैश्या-शूद्राणा मकामतो वधे द्रष्टव्यं कामतोद्वैगुण्य मिति। एतत् सर्व्वं ब्राह्मणकृतस्त्रीवधेऽभिहितम्। क्षत्रिय-वैश्य-शूद्रकृत-ब्राह्मणीव्यतिरिक्तस्त्रीवधेतु

"विप्रेतु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते॥"

इति **वृद्धविष्णु**-वचनानुसारेण पादपादहानि र्द्रष्टव्या।

ब्राह्मणीवधेतु यद्यपि स्त्रीवधस्योपपातकत्वेन, प्रायश्चित्ताल्पत्वं मन्वादिभि रुपवर्णितं तथापि ब्राह्मणजात्यविशेषाद् ब्रह्मवध-प्रकरणे पठितस्यच,—

"परिषद् या ब्राह्मणानां राज्ञां सा द्विगुणास्मृता।
वैश्यानां त्रिगुणा ज्ञेया शूद्राणान्तु चतुर्गुणा
परिषद्वद्व्रतं प्रोक्तं शुद्धये पापकर्म्मणाम्॥"

इत्यस्य वचनस्य विशेष-प्रवर्त्तकत्वात् ब्राह्मणीवधेऽपि क्षत्रिय-वैश्य-शूद्राणां यथाक्रमं द्वैगुण्यं त्रैगुण्यं चातुर्गुण्यञ्च योजनीयम्।

---

* "दृतिं धनुर्वस्तमविं" इति मिताक्षरासम्मतः पाठः समीचीनः। व्याख्यातञ्च विज्ञानेश्वरेण— ब्राह्मणादिभार्य्या दुर्वृत्ताः स्वैरिणीः प्रमाप्य क्रमेण दृतिं जलाधार-चर्म्मकोशं धनुः कार्म्मुकं वस्तं छागं अविं मेषञ्च विशुद्धये दद्यात्।

† अत्र चर्म्म-कोश-शब्दस्यैकदेशः कोशशब्दः स्खलितः, वस्तशब्दस्थाने वस्त्रशब्दश्च प्रयुक्त एतच्च लिपिकर-प्रमाद इति प्रतिभाति। दृतिः, भीस्ती, इति भाषा।

प्रयोजकादीनाञ्चाष्टमाष्टमभागहानि र्द्रष्टव्या। अत्रापि स्त्रीद्वदशोयून षोड़शवर्षीयबालानामर्द्धं प्रायश्चित्तं। पञ्चवर्षादुपर्य्येकादशवर्षपर्य्यन्तं पादमात्रं द्रष्टव्य मिति स्त्रीवध-प्रायश्चित्तम्।

इदानीं गोवध-प्रायश्चित्तं निरूप्यते।

तत्र **मनुः**—(११।१०८।१०९) (१०।११।१२।१३।१४।१५।१६)

"उपपातकसंयुक्तो गोघ्नोमासं यवान् पिवेत्।
कृतवापो वसेद् गोष्ठे चर्म्मणा तेन संवृतः॥
चतुर्थकाल मश्नीया दक्षारलवणं मितम्।
गोमूत्रेण चरेत् स्नानं द्वौमासौ नियतेन्द्रियः॥
दिवानुगच्छेत्ता गास्तु तिष्ठन्नुर्द्धं रजःपिवेत्।
शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत्॥
तिष्ठन्तौ मनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत्।
आसीनासु तथासीनो नियतो वीतमत्सरः॥
आतुरा मभिशस्तां * वा चौरव्याघ्रादिभिर्भयैः।
पतितां पङ्कलग्नां वा सर्व्वप्राणै र्विमोचयेत्॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम्।
नकुर्व्वीतात्मन स्त्राणं गोरकृत्वा तु शक्तितः॥
आत्मनो यदिवाऽन्येषां गृहे क्षेत्रेऽथवा खले।
भक्षयन्तीं न कथयेत् पिवन्त ञ्चैव वत्सकम्॥
अनेन विधिना यस्तु गोघ्नोगामनुगच्छति।
स गोहत्याकृतं पापं त्रिभिर्मासै र्व्यपोहति॥
वृषभैकादशागाश्च † दद्यात् सुचरित-व्रतः।
अविद्यमाने सर्व्वस्वं वेदविद्भ्यो निवेदयेत्॥ इति।

अत्र धेनुसङ्कलनायां मासत्रय-चतुर्थकाल-व्रतेन द्वादशधेनवो वृषभैकादश-गोभिःसह त्रयोविंशतिधेनवो भवन्ति। इदञ्च कामतः सामान्य-गोवधे ब्राह्मणेन कृते सति द्रष्टव्यम्। यत्त्वङ्गिरसा समन्त्रदण्डमेखला-धारणषष्ठ कालभोजनाधिक मेतदेव व्रत मनेकग्रन्थकलापेनाभिहितं येन चोनत्रिंश द्धेनवो भवन्ति तद्ब्राह्मणकृत-पुष्टितारुन्यादियुक्त-गोवध-विषयम्। एतच्चोभय

* अभिशस्तां आक्रान्तां।

† वृषभ एकादशी यासां गवां ताः। एकं वृषं दश स्त्रीगवी रिति यावत्।

मेव ब्राह्मण-सम्बन्धि-गोवध-विषयम्। ब्राह्मण-सम्बन्धिद्रव्यस्येवेतरसम्बन्धि-द्रव्या दुत्कृष्टत्वेनप्रायश्चित्तबहुत्वस्योचितत्वात्।

यत्तु **वशिष्ठेनोक्तम्**—

"गाञ्चेद्धन्यात्तस्याश्चर्म्मणा परिवेष्टितः षण्मासान् कृच्छ्रं
तप्तकृच्छ्रं वाऽनुतिष्ठेत् वृषभ-वेहतौ * च दद्याता" मिति।

एतच्च पूर्व्वोक्तात् स्वल्पत्वात् क्षत्रिय-सम्बन्धि-गोवध-विषयम्। कृच्छ्रं प्राजापत्यं तप्तकृच्छ्रश्चात्र **मनूक्त** मेव **वशिष्ठे**नोक्तम्।

"त्र्यहं सुष्णं पिवेदापः त्र्यहं सुष्णं पयः पिवेत्।
त्र्यहं सुष्णं घृतं पीत्वा वायु-भक्षो † दिनत्रयम् ‡॥" इति।

अत्र यद्यपि प्राजापत्ये नवदिवसेष्वेव भोजन मस्ति, तथापि द्वादशग्रासादि-परिमितत्वाद्भोजनस्य, तप्तकृच्छ्रेच नवदिवसेषु यथेष्टजलक्षीरघृताशन-सम्भवा § दन्तेचोपवासत्रय-साधारण्यात् प्राजापत्यतुल्यत्वमेव। तेनाय मर्थो भवति। क्षत्रिय-सम्बन्धि-गोवधं कृत्वा षण्मासान् कृच्छ्रं तप्तकृच्छ्रं वा चरेत्। अत्रच "वृषभ-वेहतौ दद्याता" मिति कर्त्तृद्वय-निर्द्देशात् वृषभ-हन्ता वृषभं स्त्रीगवी-हन्ता वेहच्छब्दाभिधेयां गर्भपातनशीलां गामन्ते दद्यात् ब्राह्मणाय। अत्रो-भयत्रापि वृषभवेहद्गवाधिकषाण्मासिकव्रतेन षोड़शधेनव इति।

यत्तु **याज्ञवल्क्येनोक्तम्**—(३।२६४)

"दद्यात् त्रिरात्रं चोपोष्य वृषभैकादशास्तगाः।" इति

तत्वैश्य-सम्बन्धि-गोवध-विषयम्। अत्रच धेनुसङ्कलनायां द्वादशधेनवः।

यदपरं **याज्ञवल्क्येनोक्तम्**—(३।२६३)

"पञ्चगव्यं पिवेद् गोघ्नो मास मासीत संयतः।
गोष्ठशायी * गोऽनुगामी गो-प्रदानेन शुध्यति॥

---

* वेहत् गर्भोपघातिनी। † वायुं भक्षेत्। क।

‡ एतच्च वशिष्ठवचनं मनुवचनानुवादरूपम्। मनु-वचनन्तु—(११।२१४)

"तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्।
प्रतित्र्यहं पिवेदुष्णान् सकृत्स्नायी समाहितः॥ इति

द्रव्यपरिमाणन्तु पराशरेणोक्तम्—

"षट्पलन्तु पिवेदम्भ स्त्रिपलन्तु पयः पिवेत्।
पलमेकं पिवेत् सर्पि स्तप्तकृच्छ्रं विधीयते॥ इति कुल्लूक-भट्टधृतम्।

§ सद्भावात्। ख। * गोष्ठे-शय इति मिताक्षरा-सम्मतः पाठः।

कृच्छ्रञ्चैवातिकृच्छ्रञ्च चरेद् वाऽपि समाहितः।" इति

तत्शूद्रसम्बन्धि-गोवध-विषयम्।

अत्र च धेनु-सङ्कलनायां पञ्चगव्याहारस्य स्वल्पत्वाद् गोष्ठशयनादीति कर्त्तव्यताक्लेशाच्च मासैकव्रतेन धेनुचतुष्टयं सङ्कलनीयम् *। तथा गो-प्रदानं कृच्छ्रे च धेनुरेका, अतिकृच्छ्रे धेनुद्वय मिति मिलित्वाष्टौ धेनवः। एतच्च सर्व्वं कामतो ब्राह्मणकृत-गोवध-विषयम्। अकामतस्तु तदर्द्धम्।

क्षत्रिय-वैश्य-शूद्र-कृतगोवधेतु——

"विप्रेतु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते।"

इति **बृहद्विष्णु-वचनात्** पादपाद-हानि र्द्रष्टव्येति।

गर्भिण्यादि-गोवधेतु द्विगुणं प्रायश्चित्तम्। तथाच **बृहस्पतिः**—

"गर्भिणीं कपिलां दोग्ध्रीं होमधेनुञ्च सुव्रताम्।
रोधादिना घातयित्वा द्विगुणं गोव्रतञ्चरेत्॥"

यदितु लगुडादिघातेन † गौ र्जीवति गर्भमात्र-पातो ‡ भवति तदा विशेषमाह यमः §——

"पाद मुत्पन्नमात्रे तु द्वौपादौ गात्रसञ्चिते *।
पादोनं व्रतमाचष्टे हत्वा गर्भं सचेतनम्॥ इति

अस्यार्थः—उत्पन्नगर्भघाते यथोक्त-प्रायश्चित्त-पादाचरणम्। गात्रावयवोत्पत्तौ तत् प्रायश्चित्त-पादद्वयम्। सकलगात्र-निष्पत्तौ चैतन्याभावे प्रायश्चित्त-पादत्रयमिति। अर्थाच्चैतन्ययुक्तगर्भ-घाते कृत्स्नमेव प्रायश्चित्त मूहनीय मिति।

अतिवृद्धाऽतिकृशगोवधे चार्द्धप्रायश्चित्तम्। तथाच **बृहस्पतिः**—

"अतिवृद्धा मतिकृशा मतिबालाञ्च रोगिणीम्।
हत्वा पूर्व्व-विधानेन चरेदर्द्धव्रतं द्विजः॥
ब्राह्मणान् भोजयेद् भक्त्या दद्या द्धेम-तिलां स्तथा।
हेमान्न-तिल-दानेन नरः पापात् प्रमुच्यते॥"

---

* धेनु-चतुष्टय माकलनीयम्। क।
† लगुडादिना। क।
‡ घातो। ख।
§ मनुः। ख।
* गात्रसंस्थिते। ख।

अत्यन्तव्याधि-पीड़ित-मरणावस्थान्धोन्मत्त-बालादि-गोवधे यथोक्तप्रायश्चित्त पादमात्रम्। तथाच **यमः**—

"बालमज्ञान मुन्मत्तं प्रमत्तं व्याधिपीड़ितम्।
अन्धं व्यङ्गं तमोऽरूढ़ं हत्वा पादं समाचरेत्॥" इति।

एतच्च प्रायश्चित्तं साक्षाद्गोवध-विषयम्। साक्षाद्गोवधप्रकारा श्चापस्तम्बेनोक्ताः—

"पाषाणे लंगुड़े वापि शस्त्रेणान्येन वा बलात्।
निपातयन्ति ये गास्तु तेषां सर्व्वं विधीयते॥
मुष्टि-चपेट-कीलैश्च तथा शृङ्गादि-मोटनैः।
लगुड़ादि-प्रहारेण गोवधं तत्र निर्द्दिशेत्॥
हलेच शकटे चैव दुर्व्बलं योऽभियोजयेत्।
प्रत्यवाये समुत्पन्ने तत्र प्राप्नोति गो-वधम्॥"

एतच्चोपलक्षणमात्रम्। विषाग्नि-दानादिनापि * साक्षाद्गोवधित्व मूहणीयम्। याद्दशेतु गो-वधे प्रायश्चित्ताल्पत्वं तदाह **आपस्तम्बः**—

"दमने दामनेचैव संघातेचैव योजने।
स्तम्भ-शृङ्खल-पाशैश्च मृते पादोन माचरेत्॥ इति।

तथा **यमः**—

"वाहने दोहनेचैव शकटेचैव योजने।
स्तम्भ-शृङ्खल-पाशैर्वा † मृते पादोन माचरेत्॥
अति-दोहाति-वाहाभ्यां नासिका-भेदनेन च ‡।
नदी-पर्व्वत-संरोहे मृते पादोन माचरेत्॥
दीर्घरज्वाकृतेचैव प्रग्रहे युग्म-योजिते।
हलयुग्म-मृतेचैव द्विपादं तत्र निर्द्दिशेत्॥
घण्टाभरण-दोषेण गवां यत्र विपद् भवेत् §।
चरेदर्द्धव्रतं तत्र भूषणार्थं कृतं हितत्॥

---

* विषाग्निदाहादिनापि। ख।

† स्तम्भ शृङ्खलवन्धैर्वा। ख।

‡ नासिका-च्छेदनेनच। क।

§ घण्टादिभारदोषेण गवां यत्र मृति र्भवेत्। ख।

कान्तारेषु तथा दूर्गे* गृहदाहेऽवटेषुच।
यदि तत्र विपत्तिः स्यात् पाद एको विधीयते॥
पादमेकं चरे द्रोधे द्वौ पादौ बन्धने चरेत्।
पोषणे पाद-हीनं स्यात् चरेत् सर्व्वं निपातने॥"

रोध आहार-विहार-काले † निर्गम-निरोधः। बन्धनं अयथाकाले। पोषणं अपपोषणं हीनपोषणं वा। निपातनं कूपावटादिषु निपातनम्।

काष्ठलोष्ट्राश्म-शस्त्रैस्तु साचादुवधे कृते सान्तपनादिव्रतपूर्व्वकं यथोक्त प्रायश्चित्तं करणीयम्। तथाच **स्वल्पयम**:—

काष्ठ-लोष्ट्राश्मभि र्गावः शस्त्रैर्वा निहता यदि।
प्रायश्चित्तं कथं तत्र शस्त्रे शास्त्रे विधीयते॥
काष्ठे सान्तपनं कुर्य्यात् प्रजापत्यन्तु लोष्ट्रके।
तप्तकृच्छ्रञ्च पाषाणे शस्त्रे चाप्यतिकृच्छ्रकम्॥"

बह्वीनाञ्च गवामेकशालादौ निम्नाद्यवरोहे चाज्ञानेन भेषज्योपचारेच ‡ एकदा मरणे द्विगुणं गोव्रतं नतु प्रत्येक मावृत्ति रिति।

तथाच **संवर्त्त**:—

"व्यापन्नानां बह्वनाञ्च बन्धने रोधनेऽपिवा।
भिषङ्मिथ्योपचारेच द्विगुणं गोव्रतं चरेत्॥"

एका यदातु बहुभि र्व्यापादिता तदा प्रत्येक मेव तत् प्रायश्चित्तपादपादा-चरणम्। तथाच **संवर्त्त**:—

"एका यदातु बहुभि र्दैवाद् व्यापादिता भवेत् §।
पादं पादं तु हत्यायाः चरेयु स्ते पृथक् पृथक्॥"

अत्रच सर्व्वत्रैव गोवधे "कृतवापो वसेद् गोष्ठे" इत्यादिवचनानुसारेण सशिख-वपन-पूर्व्वकं प्रायश्चित्ताचरणम्। तत्राप्ययं विशेषः।

---

* कान्तारेष्वथवा दुर्गे। क।
† आहार-प्रचार-काले। क।
‡ भैषज्योपचारेच। ख।
§ क्वचित्। ख।

यदि केश-संरक्षणं कर्त्तव्यं तदा त्रैमासिकादिव्रतं वृषभैकादशादि-गोदानं तद्द्विगुणं कर्त्तव्यम्। तथाच **यमः**—

"केशसंरक्षणार्थन्तु द्विगुणं गोव्रतं चरेत्।
द्विगुणेच व्रते चीर्णे द्विगुणा दक्षिणा भवेत्॥"

स्त्रीणान्तु विशेषमाह—

"वपनं नैवनारीणां नानुव्रज्याजपादिकम्।
न गोष्ठे शयनं तासां नचादद्याद् गवाजिनम् * ॥
सर्व्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुली-द्वयम्।
एव मेवतु नारीणां मूण्ड-मुण्डन मादिशेत् † ॥"

गो-मरणेपि ‡ अस्थिभङ्गादिकरणे प्रायश्चित्तमाह यमः—

"अस्थिभङ्गं गवां कृत्वा लाङ्गुलस्य च छेदनम्।
पाटने कर्णशृङ्गानां मासार्द्धन्तु यवान् पिवेत्॥"

अत्र धेनु-सङ्कलनायां धेनुद्वयम्।

यत् पुनः **कात्यायनेन** गोवधे त्रैवार्षिकं यच्च **गौतमेन** त्रैवार्षिक-पूर्व्वकं वृषभाधिकगोशतदानं, यच्च **सम्वर्त्तेन** द्वैमासिकपूर्व्वकं गोसहस्र-दानमुक्तं तथा **पराशरादि**मुनिभिरपि न्यूनाधिक-प्रायश्चित्तान्युक्तानि तानि कामाकामकृत-सवनस्थ-श्रोत्रिय-षड़ङ्ग-वेदाध्यायि-ब्राह्मणसम्बन्धिगुणवद्होमधेनुगर्भिणीकपिलादि-वध-विषयानि यथा-योग्यं व्याख्येयानीति। इदानीन्तु तथाविध गवाभावेन व्यवहारानङ्गत्वा न्न प्रत्येकं विषयव्यवस्थया व्याख्यातानीति।

अथादोषमाह **संवर्त्तः**—

"यन्त्रणे गो चिकित्सार्थे गूड़गर्भ-विमोचने §।
यत्नेकृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते॥
देहच्छेद- * सिराभेदप्रयत्नै रुपकुर्व्वताम्।
द्विजानां गोहितार्थं वै प्रायश्चित्तं न विद्यते॥

---

* न चाददुग्र्गवाजिनमिति हस्तलिखितप्रायश्चित्ततत्त्वादौ पाठः।

† सर्व्वत्रैवंहि नारीणां मुण्डनं समुदाहृत मिति तत्त्वादि-सम्मतः पाठः।

‡ गोमरणेतु। ख। अत्र गोरमणेतु इत्येवं पाठः समीचीनः प्रतिभाति। यतो गोमरणे गुरुणा गोवध-प्रायश्चित्तेनैव अस्थिभङ्गादि-जनित-पापस्य लघूनः प्रसङ्गतएव क्षयसम्भवः। अथवा षण्मासोत्तरं गोमरणे इत्येवं बोद्धव्यम।

§ मूढ़-गर्भ-विमोचने-इति प्रायश्चित्त-तत्त्वे पाठः।

* दाहच्छेद-शिराभेद। ख।

देवद्रोण्यां विहारेच * कूपेष्वायतनेषुच।
एषु गोषु विपन्नासु प्रायश्चित्तं न विद्यते॥
सायं संगोपनार्थं † तु न दुष्येद्रोधबन्धयोः॥
पङ्कलग्नाग्निदाहेषु प्रायश्चित्तं न विद्यते।
धूर्य्येषु वहमानेषु दण्डेनाभिहतेषु च॥
काष्ठेन लोष्ट्रेन वापि पाषाणेनापि ताड़ितः।
मूर्च्छितः पतित श्चापि मृतो वा सद्य एवच॥
एवं गवां सधूर्य्याणां प्रवक्ष्यामि यथा विधि।
उत्थितस्तु पदं गच्छेत् पञ्च सप्त दशाथवा ‡॥
ग्रासं वा यदि गृह्णीयात् तोयं वा पिवति स्वयम् A।
पूर्व्वव्याधि-विपन्नानां प्रायश्चित्तं न विद्यते B॥
शृङ्ग भङ्गेऽस्थि-भङ्गेच कटि-भङ्गे तथैवच।
यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते॥

इदं पूर्व्वव्रणशान्तौ।

अत्रापि प्रयोजकादीना मष्टमाष्टमभागहानिः। स्त्रीवृद्धरोग्यूनषोड़श-वर्षीय बालानाञ्चार्द्धप्रायश्चित्तम्। पञ्चवर्षाच्चोपरि एकादशवर्षपर्य्यन्तं पादमात्रं द्रष्टव्यमिति गोवध-प्रायश्चित्तम्।

इदानीमितर-प्राणिवध-प्रायश्चित्तं निरूप्यते।

तत्र **मनुः**—( ११।१३७ )

"वासोदद्याद्धयं हत्वा पञ्चनीलान् वृषान् गजम् *।
अजं मेष मनड्वाहं खरं हत्वैकहायनम्॥

हस्ति-वधे पञ्च-नील-वृषदानम् अजं मेषं गर्द्दभं प्रत्येकं हत्वा अनड्वाहं वृषं एकहायनं दद्यात्।

---

* विहारी गवां मैथुनम्। देवद्रोणी स्वयम्भूलिङ्गाद्यवस्थानगह्वरमिति प्रायश्चित्ततत्त्वम्। देवयात्रा इति बहु-सम्मताव्याख्या।

† सायं संयमनार्थन्तु इति तत्त्वकृत्-सम्मतः पाठः।

‡ उत्थितश्च यदा गच्छेत् पञ्च सप्त पदानिवा। क। मूलसंनिवेशितः पाठ स्तत्त्वकृत्सम्मतः।

**A** तोयं वापि पिवेद्व यदि। क। **B** पूर्व्वव्याधिविनष्टेषु। क।

* हयं अश्वं हत्वा वासोवस्त्रं दद्यात्। गजं हत्वा पञ्चसंख्यकान् नीलवर्णान् वृषान् दद्यादित्यन्वयः। अजमेषावनड्वाहमिति मूलसंहितायां टीकाकृतां सम्मतः पाठः। अजं मेषं वा हत्वा वृषभं दद्यात्। गर्द्दभं हत्वा एकवर्षं वत्सं दद्यात्। इति कुल्लूकभट्टादीनां व्याख्या।

तथा—( ११।१३८ । )

"हत्वा हंसं वलाकाञ्च वकं वर्हिणमेवच।
वानरं श्येनभासौच प्रयच्छेद् ब्राह्मणाय गाम्॥
क्रव्यादांस्तु मृगान् हत्वा धेनुं दद्यात् पयस्विनीम्।
अक्रव्यादान् वत्सतरी मुष्ट्रं हत्वातु कृष्णलम्॥"

क्रव्यादा व्याघ्रादयः। मृगाः कृष्णसारादयः। अक्रव्यादा महिषादयः। कृष्णलं * कृष्णलपरिमितं सुवर्णमितर्थः

अभ्रीं कार्ष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः।
पलालभारकं षण्ढं मासकञ्चैव सीसकम् †॥" ( ११।१३४ )

कार्ष्णायसीमिति कृष्णलोहमयीं अभ्रीं कुद्दालिकाम्। षण्ढं ‡ नपुंसकम्। तच्च मृगपच्याद्यभिप्रेतम्।

तथाच याज्ञवल्क्यः——( ३।२७ )

मार्जार-गोधानकुल-मण्डूकांश्च पतत्रिणः।
हत्वा त्र्यहं पिवेत् चीरं कृच्छ्रं वा पादिकं भवेत् §॥"

अत्र पतत्रिणः पूर्व्वोक्तव्यतिरिक्ताः * कृच्छ्रपादश्चोक्तः—

"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रं प्रकीर्त्तितम्॥"

तथा शूद्रहत्याव्रतमभिधायोक्तम् †——

"अस्थिमतां सहस्रं वा तथानस्थिमतामनः।"

अस्थिमतां कृकलासादीनां सहस्रस्य वधे तथाऽनस्थिमतां जलौकादंशमशकादीनां शकटैक-वहनीय-राशिवधे शूद्र-हत्याव्रतं चरेत्। तच्च—

"मोहाच्छूद्र-वधं प्राप्य तप्तकृच्छ्रं समाचरे"—

दिति वचनविषयं मनूक्तं तप्तकृच्छ्र मभिप्रेतम्।

---

* कृष्णलः सुवर्णरत्तिका इति कुल्लूकभट्टः।

† सीसं पञ्चैकमासकम्। ख। मूलसंहितायान्तु—"सैसकञ्चैकमाषकम्" इति पाठः। नपुंसकं हत्वा पलाल-भारं सीसकञ्चमासकं दद्यादिति कुल्लूकभट्टः।

‡ पण्डं। क।

§ कृच्छ्रपादादिकं भवेत्। ख।

* पूर्व्वोक्तव्यतिरेकेणाभिप्रेताः। क।

† शूद्रवध मभिधायोक्तम्। क।

एतच्चाकामतः कामतस्तु द्वैगुण्यम्।

अस्थिमदल्पप्राणिवधेतु किञ्चिद्धान्यादिकं ब्राह्मणाय देयम्।

अनस्थिमदल्प-प्राणि-वधेतु प्राणायाममात्रकरणम् *। तथाच **मनुः**— ( ११।१४१ )

"किञ्चिद्देयन्तु विप्राय दद्या दस्थिमतां वधे।
अनस्थिमतान्तु हिंसायां प्राणायामेन शुध्यति॥"

अथेदानीं रहस्यकृतब्रह्म-वधे † प्रायश्चित्तं निरूप्यते।

तत्र **गौतमः**—

"रहस्यप्रायश्चित्तमविज्ञातदोषस्येति।"

अन्येनाविज्ञातदोषस्य रहस्यप्रायश्चित्तम्। तदपि क्रियमाण मन्येनाविज्ञायमान मेवावश्यं कर्त्तव्यम् ‡। तथाच **प्रचेताः** —

"रहस्ये रहस्यं प्रकाशे प्रकाश" मिति।

तत्र यदि कर्त्ता स्वयं प्रायश्चित्तानभिज्ञ स्तदा कस्यचिद्रहस्य§ कृतपापस्य किं प्रायश्चित्तमिति व्याजेन प्रायश्चित्ताभिज्ञं स्पृष्ट्वाऽवगम्य प्रायश्चित्तं कुर्य्यात्। सप्तविधश्च ब्रह्म-वधः प्रोक्त एव।

अत्र यद्यप्यस्मिन् रहस्यकृते ब्रह्मवधे इदं प्रायश्चित्तमिति शृङ्ग्याहिकतया वचनं नास्ति, तथापि "एनसिगुरुणि गुरूणि लघुनि लघूनि इति— **गौतम**-वचनानुसारेण प्रायश्चित्त-व्यवस्थोहनीया।

तत्राज्ञानतः साक्षाद्-ब्रह्मवधे भैक्षाहारी गवानुगमनं कुर्व्वन् पावमानीं * जपन् संवत्सरेण शुध्यति †। **तथाचमनुः**—( ११।२५७ )

"महापातक-संयुक्तो ऽनुगच्छेद् गाः समाहितः।
अभ्यस्याब्दं पावमानीं भैक्ष्याहारो विशुध्यति॥"

---

* "किञ्चिदेवतु विप्राय" टीकाकृत्सम्मतो मूलसंहितायां पाठः। प्राणायामश्च "सव्याहृतिं सप्रणवां गायत्रीं शिरसासह। त्रिः पटे दायत-प्राणः प्राणायामः स उच्यते इति वशिष्ठोक्तः।

† रहस्यकृतवधे। ख।

‡ अन्येनाविदित-दोषस्य प्रायश्चित्तमपि क्रियमाण मन्येनाविज्ञायमानमेव कर्त्तव्यम्। ख।

§ कस्यचिद्रहस्यकृतपापे किं रहस्यप्रायश्चित्तम्। क।

* मूलसंहितायान्तु, "पावमानी" रिति बहुवचनान्तः पाठः। पावमानीः विद्यादिऋच इति कुल्लूक भट्टः।

† शुद्धो भवति। ख।

यत्तु मनुना अरण्ये पराक-त्रयं प्रतिपराकञ्च स्वशाखाध्ययन मुक्तम्, तदप्रवृत्त-प्रवर्त्तकप्रयोजक-विषयम्। **तथाचमनुः**—( ११।२५८ )

"अरण्ये वा त्रिरभ्यस्य प्रयतो वेद-संहिताम्।
मुच्यते पातकैः सर्व्वैः पराकैः शोधित स्त्रिभिः॥"

पराक-स्वरूपञ्च **मनुनोक्तम्**—( ११।२१५ )

"यतात्मनोऽप्रमत्तस्य द्वादशाह मभोजनम्।
पराको नाम कृच्छ्रोऽयं सर्व्वपाप-प्रणोदनः *॥

यदपि **गौतमेन** प्रथमदशदिनानि दुग्धमात्राशनं, द्वितीयदशदिनानि घृतमात्राशनं †, तृतीयदशदिनानि जलमात्राशनमुक्तं तदध्यगतवैमनस्यापादकानुग्राहक-विषयम्। तथाच **गौतमः**—

"पयोव्रती ‡ दशरात्रं घृतेन द्वितीयं अद्भिस्तृतीयमिति।"

यत्तु याज्ञवल्क्येन त्रिरात्रमुपोष्य जलमध्येऽघमर्षण § जपोऽन्तेच गोदान मुक्तं तत् प्रवृत्तोत्साहजनक-प्रयोजक-विषयम्।

तथाच **याज्ञवल्क्यः**—( ३।३०१ )

"त्रिरात्रोपोषितो जप्त्वा ब्रह्महात्वघमर्षणम्।
अन्तर्जले विशुध्येत दत्त्वा गाञ्च पयस्विनीम्॥"

अघमर्षणञ्च वारत्रय मावर्त्तनीयमिति। तथाच **गौतमः**—

"अन्तर्ज्जले त्वघमर्षणं त्रिरावर्त्तयन् सर्व्वपापेभ्यो मुच्यत इति।"

यत्तु **मनुना** उपवासत्रयं प्रत्यहं त्रिसवनं स्नानं वारत्रयाघमर्षणावर्त्तन ञ्चोक्तम्*। तद्गन्यमानानुग्राहकव्यूदासकानुग्राहकविषयम् †। तथाच

**मनुः**—( ११।२५९ )

"त्र्यहं तूपवसे द्युक्त स्त्रिरह्नोऽभ्युपयन्नपः।
मुच्यते पातकैः सर्व्वै र्जप्त्वा त्रिरघमर्षणम् ‡॥" इति।

---

* पराको नाम कृच्छ्रोक्तः सर्व्व-पाप प्रणोदकः। क।

† वैमनस्यापादक। क।

‡ पयोव्रतं। ख।

§ अघमर्षणेन महर्षिणा दृष्टं सूक्तं अघ मर्षनम्। "ऋतञ्च सत्यञ्चे"त्यादि।

* प्रत्यहं त्रिसवनं स्नानं वारत्रयाघमर्षणावर्त्तनं त्रिरात्रोपवासश्चोक्तः। क।

† तद्गन्यमानानुग्राहकव्युदास-विषयम्। ख। ‡ त्रिर्जपित्वाघमर्षण मिति मूलसंहितायां पाठः।

यत्तु **विष्णुना** मासं नद्यां स्नानं षोड़श-प्राणायाम-करणम् प्रत्यह मेककाले हविष्यान्नभोजनञ्चोक्तं तदनुमन्तृविषयम्।

तथाच **विष्णुः**—

अवन्ती मासाद्य स्नातः प्रत्यहं षोड़शप्राणायामान् कृत्वा एककालं हविष्याशी मासेन ब्रह्महा पूतो भवति।

**मनुरप्याह**—( ११।२४८ )

"सव्याहृतिकाः सप्रणवाः प्राणायामाश्च षोड़श।
अपिब्रह्महनं मासात् पुनन्त्यहरहः कृताः * ॥"

प्राणायामश्चोक्तो **योगियाज्ञवल्क्येन**—

"सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठे दायतप्राणः प्राणायामः सउच्यते॥"

तेनाय मर्थो भवति। प्राणान् संयम्य सोङ्कारां सप्तव्याहृतीः पठित्वा गायत्रीं पठेत्। अन्ते चापोज्योति" रिति शिरः ततो निःश्वासं परित्यजेत्। इत्थमेव षोड़शधावर्त्तनमिति।

यत्तु **याज्ञवल्क्ये**ना "होरात्रोपषितो जलशयना दुत्तीर्य्य लोमभ्यः स्वाहेति लोमनखत्वङ् मांसास्थिशोनितस्नायुमज्जस् प्रत्येकं पञ्च पञ्चाहुतिभि श्चत्वारिंशद्-घृताहुती र्जुहुया" दित्युक्तम्, त त्तदर्थापहारताड़नादिनिमित्तोत्पन्न-ब्रह्मवध-विषयम्। अथाच **याज्ञवल्क्यः**—( ३।३०३ )

"लोमभ्यः स्वाहेति वाचा ह्यनिसं मारुताशनः।
जले सुप्ताभिजुहुया † च्चत्वारिंद् घृताहुतीः॥"

यत्तु **गौतमेन** सावित्र्याः सहस्रधावर्त्तनमात्रमुक्तं तद्वाङ्मात्र-निमित्त-जात-क्रोधोत्पन्न-ब्रह्म-वधविषयम्। तथाच **गौतमः**—

"सावित्रीं वा सहस्रकृत्व आवर्त्तयेत् पुनीते चैवात्मानमिति।"
सर्व्वं चात्राकामतः साचादब्रह्मवधव्यतिरिक्ते द्रष्टव्यम
"विहितं यदकामानां कामा त्तद्द्विगुणं स्मृतम्।"

---

* मनुसंहितायान्तु—"सव्याहृतिप्रणवकाः प्राणायामास्तु षोड़श। अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः॥" इति पाठः।

† जले स्थित्वार्चिं जुहुयादिति मिताक्षरासम्मतः पाठः।

इति देवल-वचनात् कामतो द्वैगुण्यम् । कामतस्तु साक्षाद्रहस्य-ब्रह्मवधेऽपि मरणान्तिकमेव । कामतो ब्रह्मवधे निष्कृत्यभावस्योक्तत्वात् ।

अपिच कामकृतसाक्षाद्ब्रह्मवधव्यतिरिक्तवधान्तरे तावत् प्रकाशे कृते व्रतरूपं प्रायश्चित्तमिति निश्चितमेव । तत् समभिव्याहृतञ्च व्रतरूपं ब्रह्मवध रहस्य-प्रायश्चित्तं अतः तदपि कामकृतसाक्षाद्ब्रह्मवधव्यतिरिक्तवधान्तरविषय मेव व्यवतिष्ठते । तथाच **याज्ञवल्क्यः**—( ३।३०० )

"विख्यातदोषः कुर्व्वीत पर्षदोऽनुमतं व्रतम् ॥
अविख्यापितदोषस्तु रहस्य-व्रतमाचरेदिति * ॥"

तेनेतररहस्य-ब्रह्मवधव्रतानां कामतोद्वैगुण्यं चरितव्य मिति रहस्यकृत ब्रह्मवधप्रायश्चित्तनिरूपणम् ।

इदानीं नानाविध-रहस्यकृतवधप्रायश्चिं निरूप्यते । तत्राह **याज्ञवल्क्यः** —( ३।३०६ )

"प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये † ।
उपपातक-जाताना मनादिष्टस्य चैवहि ॥"

अस्यार्थः—उपपातकस्य जातं जन्म येषु ते उपपातकजाता उपपातक-कर्त्तार इत्यर्थः । तेषां सर्व्वपापापनुत्तये प्राणायामशतं करणीयम् ।

अन्यस्याप्यनुक्तप्रायश्चित्तविशेषस्य पापस्यापनोदनाय प्राणायामशतं करणीयम् ।

तदुक्तं "अनादिष्टस्य चैवहीति" । अत्र गौरवलाघवापेक्षया प्राणायामशतमेव एकाह द्व्यह त्र्यहादिक्रमेण मासं षण्मासं संवत्सरं वाऽभ्यसनीयमिति रहस्यप्रायश्चित्तम् ।

इति बालवलभीभुजङ्गापरनामभट्टश्रीभवदेवकृतौ प्रायश्चित्तप्रकरणे ब्रह्मवध-परिच्छेदः समाप्तः ॥

इदानी मभक्ष्य-भक्षण-प्रायश्चित्ते निरूपणीये महापातकत्वेन गुरुत्वात् प्रथमं सुरापानप्रायश्चित्तमेव निरूप्यते ।

तत्रानिरूपिते सुराशब्दार्थे सुरापानप्रायश्चित्तानिरूपणात् प्रथमं सुराशब्दार्थं एव निरूप्यते ।

---

* पराकवयव्रतादिक मित्यर्थः ।

† रहस्यद्व्रतमाचरेत् । ख । "अनभिख्यातदोषस्तु रहस्यं व्रतमाचरे" दिति मिताक्षरासम्मतः पाठः ।

‡ सर्व्वपापस्य नुत्तये । क ।

केयं सुरानामेति ? तत्र तावल्लोकानां यावन्मद्येष्वेव सुराशब्दोऽप्युज्यते। नच मनुवचनादेव निर्णयः, तस्यापि त्रैविध्यात्। अथाच **मनुः**—( ११।९३ )

सुरा वै मल मन्नानां पाप्माच मल मुच्यते।
तस्माद् ब्राह्मण-राजन्यौ वैश्यश्च न सुरां पिवेत्॥"

अन्नान्नविकारस्यैव सुरात्वमवगम्यते। पुनरप्याह—

"गौड़ी पैष्टी च माध्वीच विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैरिति॥

अत्र गुड़पिष्ट-मधु-विकाराणां त्रयाणा मेव सुरात्वं परिस्फुरति *।

तत् कथमत्राध्यवसाय इति ? उच्यते—

पैष्टीशब्दाभिधेयैव सुरा मुख्यसुराशब्दार्थ इति ब्रूमः। तथाहि नतावन्मद्यमात्रवचनोऽयं सुराशब्दः। मद्यसुराशब्दयोर्भिन्नार्थ-प्रतिपादकानेकवचन विरोधात्। तथाच **मनुः**—( ११।९५ )

"यक्षरक्षः पिशाचान्नं मद्यं मांसं सुरासवम् †।
तद् ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥" इति।

तथाच वृहद् **याज्ञवल्क्यः**—

"कामादपिहि राजन्यो वैश्योवापि कथञ्चन।
मद्यमेवासुरां पित्वा न दोषं प्रतिपद्यते॥"

तथाच **शङ्खः**—

"असुरामद्यपायी चान्द्रायणं चरे दिति॥"

नापि गुड़पिष्टमधुविकाराणामेव सुरात्वम् ? एकशब्दस्यानेक-शक्ति-कल्पना-गौरवदोषात्। न च मद्यान्तरव्यावृत्तमेतत्त्रितयानुगतं किञ्चिदेकं सुरात्वं नाम सामान्यमस्ति। किञ्च गौड़ीमाध्वी-शब्देनहि इक्षु मधुविकारस्यसुरात्वमभिप्रेतम्। पुलस्त्यश्च इक्षुमधुविकारव्यतिरिक्तमेवसुरात्वमाह।

तथाच **पुलस्त्य**:—

"पानसं द्राक्ष-माधुकं खार्ज्जूरं ताल मैक्षवम्।
माध्वीकं टाङ्कमाध्वीकं मैरेयं नारिकेलजम्॥
समानानि विजानीयान्मद्यान्येकादशैवतु।
द्वादशन्तु सुरामद्यं सर्व्वेषा मधमं स्मृतम्॥" इति।

---

* परिस्फुटयति। क। † आसवो मद्यसुरा-प्रकृतिद्रव्यजीमदहेतु रिति मेधातिथिः। आसूयते इति आसवो मद्यानामवस्थाविशेषः सद्यः कृतसन्धानः सञ्जातमद्य-स्वभाव इति कुल्लूक भट्टः।

तथाच विष्णुः—

"माधुक मैक्षवं टाङ्कं तालखार्जूरपानसम्।
माध्वीकं रसमाध्वीकं मैरेयं नारिकेलजम्॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्यतु।"

तेन यदेतन्मनुनोक्तम्:—

"सुरावैमलमन्नानां पाप्माच मल मुच्यते।
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिवेत्॥"

तदनुरोधेनान्नविकारस्यैव सुरात्वं मुख्यम्।* अन्नशब्दश्च व्रीहिविकार एव ओदनपिष्टकादौ प्रसिद्धो नतु मधुगुड़ादौ। मद्यस्यच पिष्टकादिव दोदनादेरपि निष्पत्तेः पैष्टीशब्दोऽयं व्रीह्यन्नविकार एव। अतएव मध्वादि-विकार-रूपमेकादशमद्य मभिधाय सकल-व्रीह्यन्न-साधारण मेवोक्तम्—"द्वादशन्तु सुरामद्य" मिति। तेन पैष्टीशब्दाभिधेयव्रीह्यन्न-विकार एव मद्यविशेषो मुख्य-सुराशब्दार्थं इति निर्णीयते। मद्यान्तरेतु मदकारित्वगुणयोगाद् गौणोयं सुराशब्दः।

तथाच भविष्यपुराणम्—

"सुराच पैष्टीमुख्योक्ता नतस्यास्त्वितरे समे।
पैष्ट्याः पानेतु चैतेषां प्रायश्चित्तं निवोध मे॥"

अतः पैष्टी-सुरापानमेव त्रैवर्णिकस्य महापातकम्।

ननु "गौड़ीपैष्टीच माध्वीच विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः॥

इत्यस्य मनुवचनस्य कागतिः† उच्यते—

गौणत्वेऽपि सुराशब्दस्य गौड़ीमाध्वीमद्यपानस्य ब्राह्मणगतत्वेन तुल्य प्रायश्चित्त-प्रदर्शनार्थम्। तदयं वचनार्थः—

गौड़ी-पैष्टी-माध्वी त्रिविधैव ब्राह्मण-गोचरत्वेन सुराज्ञेया।‡

सुराया मसुरायाश्च सुराशब्दो ब्राह्मण गोचरत्वेन तुल्यप्रायश्चित्त-प्रदर्शनार्थः § एत-देवोत्तरार्द्धेन व्यक्तीकृतम्*। यथैवैकापैष्टो मुख्यसुरा त्रैवर्णिकैरपेया तथा

---

* मुख्यसुरात्वम्। ख।

† अस्य मनुवचनस्य तर्हिकावार्त्ता?। ख।

‡ ब्राह्मणगोचरान्नसुरा ज्ञेया। ख।

§ तुल्यरूपत्व—प्रदर्शनार्थः। ख।

* अतएवोत्तरार्द्धेण व्यक्तीकृतम्। क।

द्विजोत्तमै ब्राह्मणै गौड़ी माध्वीच न पातव्या इत्यर्थः। यदि तु सर्व्वासामेव मुख्यसुरात्वं स्यात् तदा त्रिविधा सुरा न पातव्येत्येतावतैवार्थपरिसमाप्तौ "यथैवैका तथा सर्व्वा नपातव्या" इति वचन मनर्थकं स्यात्। यदातु पैष्टी-मात्रमेव मुख्यसुराशब्दार्थः तदातुल्यप्रायश्चित्तप्रदर्शनार्थं भेदेनोपन्यासोयुक्तः। तथाचाष्टमाध्याये द्वितीयपादे प्रथमाधिकरणे भाष्यकारेणोक्तम्—

"दर्शपौर्णमासस्य हविषोविकाराः सुरा वाजिन इति।

एतच्च पिष्टकविकारस्य मुख्यसुराशब्दार्थत्वे उपपद्यते। नतु मध्वादि-विकारस्य मधुगुड़योर्दर्शपौर्णमासस्यहविस्त्वाभावात्। अतः पैष्टीसुरैव मुख्य-सुराशब्दाभिधेयेति। तेनायमर्थोभवति। पैष्टीशब्दाभिधेयव्रीह्यन्नविकार एव मुख्यसुराशब्दार्थः। तत्पानमेव त्रैवर्णिकस्य महापातकम्। गौड़ीमाध्वी-सुरापानेतु ब्राह्मणस्य पैष्टीपानवदेव प्रायश्चित्तम्। क्षत्रियवैश्ययोस्तुतत्पाने न दोष इति।

अत्र यद्यपि "ब्राह्मण-राजन्यौवैश्यश्च न सुरां पिबेदिति" पुंलिङ्ग निर्द्देशोऽस्ति तथापि रागतः प्राप्तवर्णत्रयसुरापानानुवादेन निषेध-प्रतिपादनाद्विशेषविवक्षाहेतु-भूतविध्यपेक्षाया अभावात् "वाजपेयस्यपूप" इतिवच्चानन्यगतिकशब्दोपादाना-भावात् ब्राह्मणादिजातिमात्रस्यैवविवक्षितत्वात् स्त्रीणामपि ब्राह्मणीक्षत्रिया वैश्यानां सुरापानं महापातकमेव। तथाच याज्ञवल्क्यः—(३।२५।६)

"पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्।
इहैव शूकरी गृध्री शुनीचैवोपजायते * ॥"

एतच्च सकल माचाराधिकरणेवार्त्तिककारपादैः सुव्यक्तमेव प्रपञ्चि-तम्। बालकेनतु "गौड़ीपैष्टीमाध्वीष्वेव सुराशब्दोमुख्य" इति यदुक्तम्* तत्तन्त्रटीका † परिज्ञानेनैव।

इदानीं प्रायश्चित्तं निरूप्यते। तत्र मनुः—(११।९१।९२)

"सुरां पीत्वाद्विजोमोहादग्निवर्णां सुरां पिबेत्।
तया स्वकाये निर्द्दग्धे मुच्यते पातकात्ततः॥
गोमूत्र मग्निवर्णं वा पिबेदुदक मेववा।
पयोघृतं वा मरणाद् गो-शकृद्रसमेववा॥" इति।

* यदभिमतम्। क। † तन्त्रवार्त्तिकटीका इत्यर्थः।

‡ ब्राह्मणीग्रहणञ्चात्र "तिस्रोभार्यानुपूर्व्वेण" इतिन्यायेन यस्य द्विजातेर्यावत्योभार्य्या स्तासामुपलक्षणम्। इति मिताचरा।

याज्ञवल्क्योऽप्याह—(३।५३)

"सुराम्बु-घृत-गोमूत्र-पयसामग्निसन्निभम्।
सुरापोऽन्यतमं पीत्वा मरणा च्छुद्धि मृच्छति॥"

एतच्चकामतः सुरापानविषयम्। तथाच बृहस्पतिः—

"सुरापाने कामकृते ज्वलन्तीं तां विनिक्षिपेत्।
मुखे तया विनिर्दग्धो मृतः शुद्धि मवाप्नुयात्॥"

एतच्च सकृत्पाने द्रष्टव्यम्। तथाचाङ्गिराः—

"सुरापानं सकृत्कृत्वा योऽग्निवर्णां सुरां पिबेत्।
स पावयति चात्मान मिहलोके परत्र च॥" इति।

अकामतस्तु बलात्कारेण भ्रमेणवासुरापाने न मरणान्तिकम्—किन्तु द्वादश वार्षिकमेव। तथाच शङ्खः—

"अधःशायी जटाधारी पर्ण-मूल-फलाशनः।
एककालं समश्नानो वर्षेतु द्वादशे गते॥
रुक्म-स्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे॥"

एतच्चाकामतः सकृत्पान-विषयम्—। अभ्यासेत्वकामतोपि मरणान्तिकमेव। तथाच वशिष्ठः—१६।२।

"अभ्यासेनतु सुरापोऽग्निवर्णां तां पिबेद् द्विजः।
मरणात् पूतोभवतीति ज्ञायत इति॥"

अत्र यद्यपि द्रवद्रव्यस्य कण्ठदेशादधोनयनमात्रमेव पानं तच्चैकस्मिन् प्रयोगेऽनेकधा भवति तथापि न तथाभूतोऽभ्यासोऽपेक्षितः। यतः पिबतिधात्वर्था-भ्यासोह्यभ्यासः। एकफलोद्देश-प्रवृत्तकृतिव्याप्यानाञ्चैकोपक्रमाणां व्यापार-निचयानामप्येकधात्वर्थत्वम्। यथैकफलोद्देशैनैकप्रयत्नोपक्रमाणां स्थालीसन्मा-र्ज्जनादीना मोदनपरीक्षणपर्य्यन्तानां व्यापार-निचयाना मेकपचतिधात्वर्थत्वम्। यथा प्रहारक्षणानां भिन्नत्वेऽपि एकफलोद्देशैनैक-प्रयत्नोपक्रमणत्वेनैकहन्ति-धात्वर्थत्वम्। अन्यथा प्रतिप्रहारं "अपहतं रक्ष" इतिमन्त्रावृत्तिप्रसङ्गात्। तेनात्राप्येकफलोद्देशैनैक-प्रयत्नोपक्रमाणामभ्यवहाराणा मेकस्मिन् प्रयोगे सकृत् पानत्वं नाभ्यासः। प्रयोगभेदेत्वभ्यासएवेति सिद्धम्।

यच्चाङ्गिरसा

"महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिः।"

इति सकलमहापातकसाधारणं त्रैवार्षिकप्रायश्चित्त मुक्तम् तदत्र (तच्च) तक्रादिमिश्रितईषदुपलभ्यमान-गन्धरस-सुरापान-विषयम्।

नच मिश्रितत्वेऽपि सुरात्वानपगमादमिश्रित-समत्व मेवेतिवाच्यम्, तक्रादि-द्रव्यान्तरान्तःप्रवेशाद्विभक्तसूक्ष्मरूपत्वेनामिश्रितसुरा-वैलक्षण्यात्। सूक्ष्मसुराया-स्वल्पोपसर्ज्जनत्वेनाभ्यवहारेऽपि दोषतुल्यत्वेसति वातागतसूक्ष्मसुरासंयुक्त तक्रादिपानेऽपि महापातकित्व-प्रसङ्गात्।

नच तत्र निवृत्त मेवागमनं सुराया इति वाच्यं, तत्समानदेशएव सुरागन्धो-पलम्भात्। तेन यथा यथा सूक्ष्मत्वं भवति तथातथा प्रायश्चित्तविशेषात् तक्रादिमिश्रित-किञ्चिदुपलभ्यमानगन्धरस-सुरा-पानेऽपि त्रैवार्षिकमेवेति। यत्तु

याज्ञवल्क्येन—*

"कणान् वा भक्षयेदब्दं पिण्याकं वा सकृन्निशि।
सुरापानापनुत्यर्थं चीरवासा † जटीध्वजी॥" इति

वार्षिकं प्रायश्चित्तमुक्तम्, तत्प्रचुरतरतक्रादिप्रवेशेनानुपलभ्यमानगन्धरस सुरा-पानविषयम्। नतु मुखमात्रप्रवेश-विषयमिति बालकेनाभिहित मादरणीयम्। तस्यपानशब्दानभिधेयत्वात्। एतदुभयमपि ज्ञानतस्तक्रादिमिश्रितसुरापान विषयम्। अज्ञानतस्तदर्द्धम्। यत्तु बौधायनेनोक्तम्—

"अमत्या सुपापाने कृच्छ्राब्दपादञ्चरित्वा ‡ पुनरुपनयन मिति" तदप्यज्ञानत स्तक्रादिमिश्रित-किञ्चिदुपलभ्यमान-गन्धरस-पीतोत्तारित-सुरापान-विषयम्।

यत्तुवशिष्ठेनोक्तम्—

मत्यापानेऽसुरायाः सुरायाश्चाज्ञानेन कृच्छ्रातिकृच्छ्रौ घृतप्राशनं संस्कारश्चेति" तत् प्रचुरतरतक्रादिप्रवेशेनानुपलभ्यमान-गन्धरसपीतोत्तारित-सुरापानविषयम्।

अत्र यद्यपि उत्तारितत्वानुत्तारितत्व-विशेषो न श्रूयते, तथापि चाण्डालाद्युदक-पाने उत्तारितत्वेन प्रायश्चित्त-विशेषस्य वक्ष्यमाणत्वा दत्राप्यूहनीयम्।

* वचन मिदं याज्ञवल्क्य-संहितायां न दृश्यते। परन्तु (११।९२) मनुसंहितायां दृश्यते। याज्ञवल्क्य संहिताया अपरार्कटीकायाञ्च इदं मनुवचनत्वेन गृहीतम्।

† वनेवासा। ख।

‡ कृच्छ्रार्द्धपालनं चरित्वा। ख।

तथाहि, उत्तारणस्यापि पापत्त्वय-हेतुत्वमाह **मनुः**—(११।१६०)

"अभोज्य मन्नं नात्तव्य मात्मनः शुद्धिमिच्छता।
अज्ञानाद्भुक्त * मुत्तार्य्यं शोध्यद्रव्यादि-शोधनै रिति॥"

अविज्ञातगन्धरस-सुरासंसृष्टद्रव्य-† भक्षणेतु पुनरुपनयनमात्रम्।

तथाच **मनुः**—(११।१५०)

"अज्ञानात् प्राश्यविण्मूत्रं सुरासंसृष्ट ‡ मेवच।
पुनः संस्कारमर्हन्ति त्रयोवर्णाद्विजातयः। इति॥"

पुनः संस्कारे विशेषमाह **मनुः**—§ (११।१५६)

"अजिनं मेखला दण्डो भैक्षचर्य्याव्रतानि च।
निवर्त्तन्ते द्विजातीनां पुनः संस्कार-कर्म्मणि॥"

**बृहद्विष्णुः**—

"वपनं मेखलादण्डो भैक्षचर्य्याव्रतानिच।
निवर्त्तन्ते द्विजातीनां पुनः संस्कार-कर्म्मणि॥"

मुखकुहर-प्रवेशमात्रे त्वनभ्यवहारे पानोपक्रमस्यानिष्पन्नतात् * यथाविध-सुरापाने यत्प्रायश्चित्तं तदर्द्धं द्रष्टव्यम्।

एतच्च सुरापान-प्रायश्चित्तं—

"गौड़ीपैष्टीच माध्वीच विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमै॥"

रिति **मनु**वचनप्रतिपादिततुल्यत्वानुरोधेनामुख्यत्वेऽपि गौड़ीमाध्वीसुरा-पानेऽपि-ब्राह्मणस्य तुल्यं द्रष्टव्यम् †।

क्षत्रिय वैश्ययोस्तु पैष्टी-सुराव्यतिरिक्त-सकल-सुरापानएव न दोषः। पैष्टी सुरापानेतु

"विप्रेतु सकलं देयं पादोनं क्षत्रियेमतम्।
वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते॥

---

* अज्ञातभुक्त। ख। अज्ञानादभुक्तन्तूत्तार्य्यं शोध्यं वाप्याशुशोधनैरिति संहितायां पाठः।

† सुरासं-सृष्टद्रव्य। ख।

‡ संसृष्ट। ख।

§ अजिनमित्यत्र "वपन"मिति मनुसंहितायां पाठः।

* पानोपक्रमस्यनिष्पन्नत्वात्। ख।

† पातकित्वं। ख।

इति वचनानुसारेण यद्रूप-सुरापाने ब्राह्मणस्य यद्रूपं प्रायश्चित्तं तत्र क्षत्रिय वैश्ययोः पादपादह्रानि द्रष्टव्या। मरणान्तिकेतु प्रायश्चित्ते भागापहारासम्भवात् कामतः सुरापाने क्षत्रियवैश्ययोरपि मरणान्तिकमेव। एवमुपनयनरूपेच प्रायश्चित्ते भागासम्भवात् तक्रादिमिश्रितसुरापानेतु क्षत्रिय-वैश्ययोरपि पुन-रुपनयनमेव ‡।

शूद्रस्यतु सुरापाने निषेधाभावात् इदं वचनमनवकाशमेवेति। अनुपनीत ब्राह्मणापरिणीत-ब्राह्मणीकृत-सुरापाने न मरणान्तिकं किन्तु द्वादशवार्षिकमेव।

"सुरां पीत्वा द्विजोमोहादग्निवर्णां सुरां पिबे।"

दित्यादिवचनैरुपनीतब्राह्मणस्य परिणीतब्राह्मण्याश्च द्विजत्वेन मरणान्तिक-प्रायश्चित्तोपदेशात्।

न चायं द्विजशब्दो ब्राह्मणमात्रोपलक्षणः,. मुख्यत्वेनैवोपपत्तौ उपलक्षणत्वे-प्रमाणाभावात्। ननु निषेधमात्र-विषयोहि प्रायश्चित्तोपदेशः निशेधश्च जाति-मात्रविषय एव।

"तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिवेत्॥" इति।

कथं नोपलक्षणमिति न "सुरापेयानचद्वैजै" रितिद्विजोल्लेखेनापिनिषेध-दर्शनादेव निषेधविषयोयं मरणान्तिकप्रायश्चित्तविधिर्भविष्यति। तेनानु-पनीत-ब्राह्मणस्यापरिणीतब्राह्मण्याश्च व्रतरूपमेव प्रायश्चित्तम्। नन्वेवंसति आग्नेयश्चतुर्द्धाकरोति पुरोडाशश्चतुर्द्धाकरोतीतिवत् वाक्यद्वयेनापि एकएवाग्नेयः पुरोडाशो यथा सृज्यते तद्वदिहापोत्यर्थं।

"तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबे।"

दित्यत्र ब्राह्मणशब्दस्यापिद्विजपरत्वेन जात्युद्देशेन निषेधाभावात् कथं व्रत-रूपमपि प्रायश्चित्तमिति। तथाच **मनुः**—(२।१७२)

"शूद्रेणहि समस्ताव द्यावद्वेदे न जायते।
कृतोपनयनस्यास्य व्रतादेशन मिष्यते॥"

तथाच **कुमारासितदक्षाः**—

"जातमात्रः शिशुस्ताव द्यावदष्टौ समावयः।
सहिगर्भसमोज्ञेयो व्यक्तिमात्र-प्रदर्शितः †॥"

‡ पुनरुपनयनमिति। क।

† प्रदर्शिकः। ख।

भक्ष्याभक्ष्ये तथापेये वाच्यावाच्येतथाऽनृते।
अस्मिन्काले न दोषः स्यात् सयावन्नोपनीयते॥
उपनीतस्य दोषोऽस्ति क्रियमाणैर्विगर्हितैः।"

तथाच **कुमारः**—*

"मद्यमूत्रपुरीषाणां भक्षणे नास्तिकश्चन।
दोषस्तु वत्सरान् पञ्च ऊर्द्ध्वं पित्रोः सुहृद्गुरोः॥"

**गौतमोऽप्याह**—

"प्रागुपनयनात् कामचारो भक्षवाद इति।"

अतः कथमनुपनीतस्य निषेध-विषयत्वमिति? उच्यते यदि जाति-मात्राश्रयो निषेधो न भवेत् †

तथाच **कुमारः**—

"सुरापान-निषेधस्तु जात्याश्रय इतिस्थितिः।

अनेनच

"तस्माद्ब्राह्मणराजन्यौवैश्यश्च न सुरां पिबे"

दित्येतद्वचनविषयनिषेधस्य जातिमात्रोपसंहृतत्वात् ‡ नाग्नेयचतुर्द्धाकरण-न्यायेन उपनीतमात्रविषयनिषेधोपसंहारः सम्भवति। तेन द्विविधोऽयं सुरापान निषेधः द्विजसम्बन्धितया जातिमात्रसम्बन्धितयाच। तत्र द्विजसम्बन्धिनिषेधे मरणान्तिकप्रायश्चित्तविधिः तस्य द्विजोल्लेखेनैवविहितत्वात्। जातिसम्बन्धि-निषेधेतु साधारण **मापस्तम्बेन**—

"स्तेयं कृत्वा सुराम्पीत्वा गुरुदारांश्चगत्वा चतुर्थकालाहार स्त्रिभिर्व्वर्षैः नुदतीति" यत्प्रायश्चित्त मुक्तं तदेव योजनीयम्। अनेन पञ्चत्रिंशदधिक शतधेनवो भवन्ति। एतच्च पञ्चवर्षा दूर्द्ध्वं ज्ञानतः, अज्ञानत स्तदर्द्धम्। पञ्चवर्षा-दधस्तु ज्ञानाभावात् सकलपापाभाव-प्रतिपादक-नानावचनदर्शनाच्च नित्यमर्द्धमेव प्रायश्चित्तम् द्रष्टव्यम्। तत्रानुपनीतस्य स्वयं प्रायश्चित्त-करणासामर्थ्यात् तदीय भ्रात्रादिभिरेव प्रायश्चित्तं करणीयम्।

---

* मनुः। ख।

† यदीव जातिमात्राश्रयोऽपिनिषेधोषोन भवेत्। ख।

‡ जातिमात्रोपलक्षितत्वात्। ख।

तदुक्तम्—

"ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च।
प्रायश्चित्तं चरेद्भ्राता पितावान्यः सुहृज्जनः॥
ततोन्यूनतरस्यास्य नापराधो न पातकम्।
न वास्य राजदण्डोऽस्ति प्रायश्चित्तं न विद्यते॥"

नच पञ्चवर्षादूर्द्धं भ्रात्रादीनां प्रायश्चित्तोपदेशात् पञ्चवर्षपर्य्यन्तं भ्रात्रादिभिः प्रायश्चित्तं नकरणीय मितिवाच्यम् * यतः पञ्चवर्ष-पर्य्यन्तं प्रायश्चित्ताभावेसति तदुपरि भ्रात्रादिभिः प्रायश्चित्तं करणीय मित्युक्तं यदातु पञ्चवर्ष-पर्य्यन्तमपि प्रायश्चित्ताधिकारः, तदा तदपिप्रायश्चित्तासामर्थ्याविशेषाद् भ्रात्रादिभिरेव करणीयमिति। तेनानुपनीतबालकस्य † यद्दोषाभावप्रतिपादकानि नानामुनि वचनानि तानि

"सुरापान-निषेधस्तु जात्याश्रय इति स्थिति" रिति कुमारवचनात् सुरापान व्यतिरिक्तेतरपापविषयान्येव ‡ अतोयदपि कुमारेणोक्तम्—

"मद्यमूत्रपुरीषाणां भक्षणे नास्तिकश्चन।
दोषस्तु वत्सरान् पञ्च ऊर्द्धं पित्रोः सुहृद्गुरो॥"

रिति तदपि सुराव्यतिरिक्तेतरमद्यपाने दोषाभावप्रतिपादनार्थं मेवेदिति बोद्धव्यम्। एतेन यदपि **गौतमेनोक्तम्**—

"मद्यं पीत्वा अग्निवर्णमद्यपानं नित्यं ब्राह्मणस्येति।" § तदपि सुरामद्याभिप्रायेणैवेति द्रष्टव्यम्।

तेनानुपनीतस्य ब्राह्मणस्यापरिणीतायाश्च ब्राह्मण्या यथोक्त—व्रतरूपमेव प्रायश्चित्तम्। न तु मरणान्तिक मिति सिद्धम्।

कामतोऽभ्यासेन सुराभाण्डस्थित-जलपाने तु द्वादशाहं दुग्धेन ब्रह्मसुवर्च्चलापानं * गायत्र्यष्टसहस्र-जपश्च।

---

* नपञ्चवर्षपर्य्यन्तं भ्रात्रादिभिः प्रायश्चित्तं करणीयमितिवाच्यम्। ख।

† तेनानुपनीतस्य ब्राह्मणस्य। ख।

‡ सुरापानव्यतिरिक्तेतर-प्रायश्चित्त-विषयान्येव। ख।

§ मद्यं नित्यं ब्राह्मणस्येति। क।

* ब्रह्मसुवर्च्चला, ब्राह्मीशाक इति क-पुस्तकस्था टिप्पनी।

तथाच **बृहद्यमः**—

"सुराभाण्डस्थिता आपो यदि कश्चित् पिबेद् द्विजः।
द्वादशाहन्तु क्षीरेण पिबेद् ब्रह्म-सुवर्च्चलाम्॥*
गायत्र्यष्ट-सहस्रञ्च जप्यं कुर्व्वीत मानसम् †"।

यत्तु **बृहद्विष्णुनोक्तम्**—

"अपः सुराभाजनस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पी-शृतं ‡ पयः पिबेत्।"

तत् कामतः सकृत्-पानविषयम्।

यत्तु **मनुनोक्तम्**—(११।१४८)

"अपः सुरा भाजनस्था मद्यभाण्डस्थितास्तथा।
पञ्चरात्रं पिबेत् पीत्वा शङ्खपुष्पी-श्रितं पयः॥ §

तदकामतोऽभ्यासे सति द्रष्टव्यम्।

यत्तु **शातातपेनोक्तम्**—

"सुराभाण्डोदकपानेतु छर्द्दनं घृत-प्राशनं अहोरात्रोपवासश्चेति।" तदकामतः सकृत्-पान-विषयम्।

यत्तु **बौधायनेनोक्तम्**—

"सुरापानस्य यो भाण्डे अपः पर्य्युषिताः पिबेत्।
शङ्खपुष्पी-विपक्केन त्र्यहं क्षीरेण वर्त्तयेत्॥" इति

तदकामत एव सुराभाण्डस्थित-पर्य्युषित-जलसकृत्-पान-विषयम्।

सर्व्वञ्चैतत् शुष्कसुराभाण्डस्थित-जलपान विषयं द्रष्टव्यम्।

आर्द्रसुराभाण्डस्थित-जलपानेतु * पूर्व्वोक्त-तक्रादि-मिश्रित-सुरापानतुल्यत्व मेवेति सुरापान-प्रायश्चित्तम्।

इदानीं ब्राह्मणस्येतरमद्य-पान-प्रायश्चित्तं निरूप्यते।

तत्र कामतोमद्यपाने कृच्छ्रातिकृच्छ्र पूर्व्वकं घृतप्राशनं पुनः संस्कारश्चेति।

---

* ब्रह्मसुवर्च्चला, ब्राह्मीशाक इति क-पुस्तकस्था टिप्पणी।

† मानसमिति। ख।

‡ शङ्खपुष्पी, शङ्खाहुली, डानकणी इतिच भाषा, इति शब्दकल्पद्रुमः।
क्षीरपुष्पीत्यमरः। चोरफुली" इति प्रसिद्धा।

§ पयः शब्देनात्र क्षीरमभिप्रेतं तथाच कुल्लूकभट्टः—"शङ्खपुष्याख्यौषधि-प्रक्षेपेण पक्वं क्षीरं मतूदकं "शङ्खपुष्पीविपक्केन त्र्यहं क्षीरेण वर्त्तये" दिति बौधायनस्मरनात् पञ्चरात्रं पिबेत्॥

* सुरार्द्रभाण्डस्थित-जलपानेतु। ख।

तथाच **वशिष्ठः**—

"मद्यपानेत्वसुरायाः कृच्छ्रातिकृच्छ्रं * घृत-प्राशनं पुनः संस्कारश्चेति ॥"

अत्र † कृच्छ्रे धेनुरेका अतिकृच्छ्रे धेनुद्वयं द्वाभ्यां धेनुत्रयम् ।

अकामत स्तु मद्यपाने अतिकृच्छ्रपूर्व्वकं पुनः संस्कारकरणं विप्राणां भोजनम् । तथाच **बृहस्पतिः**—

पीत्वा प्रमादातो मद्य मतिकृच्छ्रं चरेद् द्विजः ।
कारयेत् पुनः संस्कारं शक्त्या विप्रांश्च भोजयेत् ॥"

अनुपनीतस्य पुनरत्यन्ताभ्यासतः कामतो मद्यपाने कृच्छ्रत्रयं **मात्रादिभिः** करणीयम् । तथाच **जातुकर्णः** ‡

"प्रागुपनयनाद्बालो मद्यं मोहात् पिबेद् यदि ।
तस्य कृच्छ्रत्रयं कुर्य्यान्माता भ्राता पिता तथा ॥

इदन्तु पञ्चवर्षादूर्द्धं पञ्चवर्षादधस्तु सुराव्यतिरिक्त-मद्यपानेपि दोषाभाव एव । तथाच **कुमारः**—

"मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन ।
दोषस्तु वत्सरान्पञ्च ऊर्द्धं पित्रोः सुहृद्गुरोः ॥ इति ।

एतच्चानुपनीतस्य स्वयं व्रतकरणाशक्तस्य तत्-पापप्रशमनार्थं मात्रादिभिः करणीय मित्यर्थः ।

अथ त्रिविध-सुराव्यतिरिक्त-मद्यभाण्डस्थित-जलपाने प्रायश्चित्तं निरूप्यते ।— तत्र **बृहद्यमः**—

"मद्यभाण्डस्थिता ह्यापो यदि कश्चित् पिबेद् द्विजः ।
कुशमूलविपक्केन त्र्यहं क्षीरेण वर्त्तयेत् ॥

एतदकामतः सकृत्-पान-विषयम् । यत्तु **वशिष्ठेनोक्तम्**—

"मद्यभाण्डस्थिता ह्यापो यदि कश्चित् पिबेद् द्विजः ।
पद्मोडुम्बर-बिल्वानां पलाशस्य कुशस्यच ॥
एतेषा मुदकं पीत्वा त्रिरात्रेणैव शुध्यति ।"

---

* कृच्छ्रातिकृच्छ्रपूर्व्वकं । ख ।

† तत्र । ख ।

‡ याज्ञवल्क्यः । ख ।

इद मकामतोऽभ्यास-विषयम्। यत्तु बृहद्विष्णुनोक्तम्—

"मद्य-भाण्डस्थिता आपः पीत्वा पञ्चरात्रं शङ्खपुष्पी-शृतं पयः पिबेदिति।"

तत् कामतः सकृत्-पान-विषयम्।

यच्च शङ्खेनोक्तम्— *

"मद्यभाण्डस्थिता आपः पीत्वा सप्तरात्रं व्रती भवेत्।"

तत् कामतोऽभ्यास-विषयम्।

व्रतञ्चात्र पयोभक्षणमात्र मभिप्रेतम्। सर्व्वत्रात्र—

"अशीति र्यस्य वर्षाणि बालोवाप्यूनषोड़श।
प्रायश्चित्तार्द्ध मर्हन्ति स्त्रियो व्याधित एवच॥"

इति वचनाद्बालादीना मर्द्धप्रायश्चित्तम्। बालश्च एकादशवर्षादूर्द्धं ऊनषोड़श-वर्षपर्य्यन्तम्। पञ्चवर्षादूर्द्धं एकादशवर्षपर्य्यन्तन्तु पादमात्रम्। पञ्चवर्षपर्य्यन्तन्तु प्रायश्चित्ताभाव एव, इति मद्यपानप्रायश्चित्तम्।

इदानी मितरापेयपानप्रायश्चित्तं निरूप्यते। तत्र चाण्डालोदकभाण्डस्थ-जलपाने ऽङ्गिराः—

"चाण्डालोदक-भाण्डेषु पिवेच्च तृषितो जलम्।
तत्क्षणात्तत् समुत्साय्यं प्राजापत्यं समाचरेत्॥"
यदिचानुद्धृतं तोयं शरीरे तस्य जीर्य्यति।
तदा विप्रो विशुध्यर्थं कृच्छ्रं सान्तपनं चरेत्॥"

चाण्डालसम्बन्धि-जलपानेतु हारीतः—

"चाण्डालस्यतु पानीयं ब्राह्मणस्तु यदा पिवेत्।
षड्रात्रोपषितोभूत्वा पञ्चगव्येन शुध्यति॥"

इदमपि पीतोत्सारितविषयम्। अनुत्सारितेतु षड्रात्रोपवासः सान्तपनं पञ्चगव्यञ्चेति द्रष्टव्यम्। एतच्च ब्राह्मणविषयम्। क्षत्रिय-वैश्य-शूद्राणान्तु पाद-पादहानि र्द्रष्टव्या। चाण्डालोपभुक्तशेषजलपानेतु षट्त्रिंशन्मतम्।

"चाण्डालोपभुक्तमुदकं निषेव्य विप्रः षट्त्रिंशदहानि कृच्छ्र मनुतिष्ठेत्, चतुर्व्विंशति क्षत्रियो वैश्यो द्वादश शूद्रः षड़िति॥" एतदपि पीतोत्सारित-विषयम्। अनुत्सारितेतु सर्व्वत्र सान्तपनमधिकं द्रष्टव्यम्।

---

* वृहद्विष्णुनोक्तम्। ख।

चाण्डालस्पृष्टजलपानेतु **अङ्गिरा**—

"यस्तु चाण्डालसंस्पृष्टं पिबे त्तोय मकामतः*।
स तु सान्तपनं कृच्छ्रं चरेत् शुद्ध्यर्थमात्मनः॥" इति।

चाण्डालकृतकूपस्थजलपानेतु **आपस्तम्बः**—

"चाण्डालकृतकूपेषु यद्यज्ञानाज्जलं पिबेत्।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते॥
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः।
तदर्द्धन्तु चरेद् वैश्यः पादं शूद्रस्यदापयेत्॥"

सर्व्वत्रचात्र विषयगौरवात् सान्तपनशब्देन महासान्तपन मभिप्रेतम्। अत्र धेनुद्वयम्। **चाण्डालभाण्ड**-संस्पृष्टकूपजलपानेतु **अङ्गिराः**—

"चाण्डालभाण्डसंस्पृष्टं पिबे चेत् कूपतो जलम्।
गोमूत्रयावकाहार स्त्रिरात्रेण विशुध्यति॥"

चाण्डालपतितादि-परिगृहीतवापीकूपतड़ागादि जलपानेतु पञ्चगव्यमात्रम्।

तथाच **प्रचेताः**—

"चाण्डालपतितादिपरिगृहीतवापीकूपतड़ागोदकपाने पञ्चगव्यम्॥"

सर्व्वञ्चैतदकामतः। कामतोद्वैगुण्यमिति।

रजकादिभाण्डस्थोदकपानेतु **पराशरः**–(६।२०।२१।)

भाण्डस्थितमभोज्याना मापोदधिपयः पिबेत्।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः॥

---

* प्रायश्चित्तविवेके शूलपाणिमहामहोपाध्यायैस्तु—

"यस्तु चाण्डालसंस्पृष्टं पिबेत् किञ्चिदकामतः।" इत्येवं लिखितं किञ्चित् क्षीरजलादिकमिति व्याख्यातञ्च। रघुनन्दनभट्टाचार्य्य-महोदयैरपि "पिबेत्तोयमकामतः" इति भवदेव-सम्मतः पाठः परिगृहीतः। एतेनैवं प्रतिभाति—राढ़देशीयाः शिष्टाः अपक्वक्षीरादिकमपि चाण्डालसंस्पृष्टं न पिबन्ति, पूर्व्ववङ्गोत्तरवङ्गादि वास्तव्यास्तु शिष्टा अपि चाण्डालस्पृष्ट मुदकमेव न पिबन्ति, परन्तु चाण्डालादिसंस्पृष्टमपक्वदुग्धं हट्टादितः क्रीत्वाप्यभ्यवहरन्ति। तदेतदाचारवैषम्यं राढ़गौड़वास्तव्यानामाजानिकम्। एतदनुसारेणैव वचनमपि अनादिकालतो द्विधैव पठितम्। अतएव राढ़वास्तव्यशूलपाणिमहामहोपाध्यायै राढ़ीयः पाठः समादृतः, राढेतरवास्तव्य-भवदेवभट्ट-रघुनन्दनभट्टाचार्य्यैस्तु स्वदेशाचारानुकूलपाठः परिगृहीतः। विषयनिर्द्देशावसरेऽपि शूलपाणिमहामहोपाध्यायैः "अथ चाण्डालस्पृष्टजलक्षीरादिपान-प्रायश्चित्त" मित्युपक्रान्तम्। पराशरभाष्ये माधवाचार्य्यैः शूलपाणिसम्मत एव पाठः सन्निवेशितः। अपरार्केणापि याज्ञवल्क्य टीकायां "पिबेत् किञ्चिदकामतः।" इत्येवमेव पठितः। (आनन्दाश्रम मुद्रित पुस्तके ११६२ पृष्ठे)।

ब्रह्मकूर्चोपवासेन द्विजातीनान्तु निष्कृतिः।
शूद्रस्यतूपवासेन दद्याद्दानन्तु शक्तितः॥*

चतुर्द्दश्यामुपोष्य पञ्चगव्यपानं ब्रह्मकूर्चोपवासी भवति †।

रजकाद्यन्त्यजसम्बन्धितोयपानेतु **आपस्तम्ब**—‡

अज्ञानाद् यः पिबेत्तोयं ब्राह्मणोऽप्यन्त्यजातितः।
त्रिरात्रोपषितो भूत्वा पञ्चगव्येन शुध्यति §॥

तथा ‡‡

"अन्त्यजैः खानिताः कूपा स्तड़ागानि तथैवच।
एषुस्नात्वाच पीत्वाच पञ्चगव्येन शुध्यति॥"

आपत्काले रजकादितोयपानेतु विशेषमाह **बृहस्पतिः**—

"अज्ञानाच्चेत् पिबेत्तोयं ब्राह्मणोऽन्त्यस्यमापदि।
अहोरात्रेण शुध्येत प्राणायामशतेन च॥"

शूद्रोदकपानेतु विशेषमाह **शातातपः**—

"यदिविप्रः प्रमादेन शूद्रतोयं पिबेत् स्वयम्।
प्रायश्चित्तं कथं तत्र येन शुद्धि मवाप्नुयात्॥
उपोष्य बिल्वपत्राणां पलाशस्य कुशस्य च।
एतेषामुदकं पीत्वा तेन शुद्धि मवाप्नुयात्॥" इति

शूद्रस्यपीतशेष-जलपानेतु **चतुर्विंशतिमतम्**—

"पीत-शेषं तु यत्तोयं ब्राह्मणः पिबते पुनः।
अपेयं तद्भवेत्तोयं पीत्वाचान्द्रायणञ्चरेत्॥"

**यत्तुशङ्खेनोक्तम्**

"पीतावशेषितं पीत्वापानीयं ब्राह्मणः क्वचित्।
त्रिरात्रन्तु व्रतं कुर्य्यात् वामहस्तेन वा पुनः॥" इति

---

* पराशरभाष्ये तु "भाण्डस्थ मन्त्यजानान्तु जलं दधि पयः पिबेत्। इति
२० श्लोकस्य प्रथमार्धे पाठः। २१ श्लोकस्य द्वितीयार्द्धेच
"शूद्रस्य चोपवासेन तथादानेन शक्तितः॥" इत्येवं पाठः।

† चतुर्द्दश्यामुपवासं कृत्वा यथाविहितपञ्चगव्येन ब्रह्मकूर्चोपवासी भवति। ख।

‡ विशेष माह आपस्तम्बः। क।

§ अज्ञानाद्यस्तु पानीयं पिबति ब्राह्मणो यदि।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति। ख।

‡‡ तथा चापस्तम्ब। क।

तद्ब्राह्मण-पीतावशेषित-जलपान-विषयम्।

वामहस्तेन वा पुनरिति साक्षाद्वामहस्तोद्धृत-जलपान-विषयम्।

तथाच शातातपः—

"वामहस्तेन चोद्धृत्य योनरः पिवति जलम्।
सुरापानसमं तस्य मनुराह प्रजापतिः॥"

एवं पात्रान्तरस्थमप्युदकं दक्षिणहस्तेनैवोद्धृत्य पातव्यम्।

तथाच पुलस्त्यः—

"शङ्ख-शुक्तिक मस्माच यच्चान्यत् पानभाजनम्।
दक्षिणेनैव कर्त्तव्यं नतु वामे कदाचन *॥

तथा,

"करेण तु पिवेत्तोयं यावन्मांसं न भक्षयेत्।
मांसलिप्तकरे तोयं † तुल्यं गोमांसभक्षणम्॥"

अत्र सर्व्वत्रानुक्तप्रायश्चित्तेषु प्राणायाम-शतमेव प्रायश्चित्तं कर्त्तव्यम्।

तथाच शङ्खः—

"वामहस्तस्थिते दर्भे दक्षिणेनोदकं पिवेत्।
रक्तपानं भवेत्तस्य पीत्वाचान्द्रायणञ्चरेत्॥"

तथाचाङ्गिराः—

"मूत्रं कृत्वाग्रजन्मार्द्रं ‡ स्मृतिभ्रंशाज्जलं पिवेत्।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति॥

तथाच हारीतः—

"मत्स्यकण्टक-शम्बूक-शङ्खशुक्तिकपर्द्दकान्।
पीत्वानवोदकञ्चैव § पञ्चगव्येन शुध्यति॥"

---

* कथञ्चन। ख।

† मांसमिश्रं करे तोयं। ख।

‡ अर्द्धं शौचावशिष्ट मित्यर्थः। अग्रजन्मा ब्राह्मणः।

आह्निकतत्त्वे तु "करगृहीतपात्रेण कृत्वा मूत्रपुरीषके।
मद्यतुल्यन्तु पानीयं पीत्वाचान्द्रायणञ्चरेत्॥"

इति वृहन्मनुवचनाद् यद्गुरुप्रायश्चित्तमुक्तम्। तज्ज्ञानकृताभ्यास-विषयं मन्तव्यम्।

§ नवोदकं नवखातजलं वर्षोदकञ्च, इति प्रायश्चित्ततत्त्वम्।

शवदूषितकूपोदक-पानेतु आपस्तम्बः—

"यस्तु कूपात् पिबेत्तोयं ब्राह्मणः शवदूषितात् ।
कथन्तस्य विशुद्धिः स्या दापस्तम्बोऽब्रवीन्मुनिः ॥
अच्छिन्न-भिन्नक्लिन्नेच केवले शवदूषिते ।
त्रिरात्र मुपवासश्च पञ्चगव्येन शुध्यति ॥"

इदञ्चकामतः ।

"नक्लिन्नेन नभिन्नेन केवलं शवदूषिते (तात्) ।
पीत्वाकूपादहोरात्रं पञ्चगव्येन शुध्यति ॥"

इदञ्चाकामतः ।

( एतत् सर्व्वं समानुष शव-विषयम् ।

"षण्मासं नरमरणे त्रिमासं गोमृते तथा ।
पक्षन्तु शुनिविज्ञेयं मार्ज्जारे पञ्चरात्रकम् ॥
गवाश्व (गजाश्व) खड्गि-महिष-गर्द्दभादौमृते शुचि ।
गोवत्श्ववत् शृगालादौ श्वपदादि-मृगादिषु ?
मार्ज्जारवद्गवोष्ट्रादि गृध्रकाकादि-पक्षिषु ।
मृगीषुचान्यक्षुद्रेषत्रिरात्रं स्यादशौचकम् * ॥

एतच्चतत्रैवस्फुज्यते * )

**स्मृतिः—**

"उद्धृत्याशीतिपिण्डानि घटानां शतमुद्धरेत् ।
उद्धृत्योद्धृत्यविप्रेण पुनः संस्कार माचरेत् ॥
दधिक्षीरघृतैर्युक्तं रौप्यसौवर्णकेन च ।
एषामेवतु पञ्चनामम्बुमिश्रेण शुध्यति ॥
निःसारयेज्जलं तस्य शव श्चे(श्वे) दतिदूषितम्(तः) ॥"

**तथाचदेवलः—**

"क्लिन्नो भिन्नः शवश्चैव कूपस्थो यदिदृश्यते ।
पयः पिबेत् त्रिरात्रन्तु मानुषे द्विगुणं स्मृतम् ॥" इति ।

इदमकामतः । **तथाचापस्तम्बः—**

"छिन्ने भिन्ने शवेचैव तत्रस्थो यदि तत् पिबेत् ।
पराकेण विशुद्धिः स्याद् ब्राह्मणानाञ्च भोजनात् ॥" इति ।

---

* बन्धनीमध्यस्थोग्रन्थः केवलं कपुस्तके दृश्यते । अयन्तु नितरामशुद्धः ।

इदञ्च कामतोऽभ्यासे सति द्रष्टव्यम् *। तथाचाङ्गिराः—

"कूपे विण्मूत्र-संसृष्टे † पीत्वातोयं द्विजोत्तमः।
त्रिरात्रेण विशुध्येत कुम्भे सान्तपनं भवेत् ‡॥"

सान्तपनञ्चात्र महासान्तपनं बोद्धव्यं § विषय-गौरवात्।

तथाच बृहद्विष्णुः— *

"जलाशयेष्वथान्येषु स्थावरेषु महीतले।
कूपवत् कथिता शुद्धि र्महत्सु नच दूषनम्॥"

सर्व्वत्र यतीनाञ्चतुर्गुणम्।

"वापीकूपतड़ागानां दूषितानाञ्च शोधनम्।
घटानां शतमुद्धृत्य पञ्चगव्येन शुध्यति॥"

अथापेयक्षीर-पान-प्रायश्चित्तं निरूप्यते।

तत्र मनुः— (५।८।९।१०।११।)

अनिर्द्दशाया गोक्षीरं मौष्ट्रमैकशफन्तथा।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः॥
आरन्यानाञ्च सर्व्वेषां मृगानां महिषीं विना।
स्त्रीक्षीरञ्चैव वर्ज्ज्यानि सर्व्वशुक्तानि चैवहि॥
दधि भक्ष्यन्तु शुक्तेषु सर्व्वञ्च दधिसम्भवम्।
लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवां स्तथा॥
शेलु गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत्। †
अनिर्द्दशाया गोरित्युपलक्षणम्, अजामहिष्योरपि द्रष्टव्यम्।

---

* इदमकामतोऽभ्यासेसति द्रष्टव्यम्। क।

† संसृष्टे। क।

‡ सान्तपनं चरेत्। ख।

§ सान्तपनञ्चात्र परम-सान्तपन मभिप्रेतं। ख।

* बृहस्पतिः—। ख।

† मनुसंहितायान्तु "लोहितान् वृक्षनिर्य्यासान्" इत्यादिवचनं "अनिर्द्दशाया गोः क्षीर" मित्यतः प्राक्निवद्धं दृश्यते। किञ्चान्यत् मूलसंहितायां "सन्धिनी-क्षीरं" इत्येवं पाठः। सन्धिनी ऋतुमतीति कुल्लूकभट्टः। एतद्व्याख्यानमूलं हारीतवचनञ्च "सन्धिनी वृषस्यन्ती तस्याः पयो न पिवेत् ऋतुमद्भवति।" "लोहितान् वृक्षनिर्य्यासान्" इति लोहितवर्णान् वृक्षनिर्य्यासान् वृक्षान्निर्गतरसान् कठिनतां यातान्, व्रश्चनं छेदनं तत् प्रभवान् अलोहितानपिति कुल्लूकभट्टः। शेलु "चाकिता" इति प्रसिद्धम्। पेयूषं नवप्रसूताया गोः क्षीरं अग्निसंयोगात् कठिनं भवति।

तथाच **गौतमः**—

"गोः क्षीर मनिर्दशायाः सूतकेऽजामहिष्योश्चेति ॥"

स्यन्दिनी स्वयं क्षीर-स्राविणी। शुक्तं स्वभावमधुरं गुड़ाद्यम्लतामुपगतम्। तच्च दधिव्यतिरिक्तं केवल मभक्ष्यं द्रव्यान्तरमिश्रितन्तु भक्ष्यमेव।

तथाच **गौतमः**—

"शुक्तं केवल मदधीति।" व्रश्चन-प्रभवान् छेदन-प्रभवान् लोहितान् वृक्षनिर्य्यासान् इति सामानाधिकरण्यम्। शेलुं बहुवारफलम्।

अन्यत् सुबोधम्। तथाच **वृहद्विष्णुः**—

"स्यन्धिनी-सन्धिनी-विवत्सा-गोक्षीर ममेध्यभुजश्च।"

सन्धिनी-गृहीत-गर्भा, अमेध्यभुजः मद्यादिभक्षणशीलायाः *।

तथा **चापस्तम्बः**—

"क्षत्रियश्चैववृत्तस्थो वैश्यः शूद्रोऽथवापुनः।
यः पिवेत् कापिलं क्षीरं नततोऽन्योस्त्यपापकृत् ॥"

अत्र प्रायश्चित्तमाह **शङ्खः**—

"लोहितान् वृक्षनिर्य्यासान् व्रश्चनप्रभवांस्तथा।
केवलानि च शुक्तानि तथा पर्य्युंषितानिच।
गुड़पक्वञ्च भुक्ताच त्रिरात्र ञ्चं व्रती भवेत् ॥

त्रिरात्रम् त्रिरात्रोपवासः। अत्र पर्य्युंषितशब्देन शाकभक्तस्नेहमांस-मधु-वर्ज्जितान्यभिप्रेतानि। तथाच **गौतमः**—

"पर्य्यूषित मभक्ष्यमशाकभक्त-स्नेह मांस-मधूनि ॥"

इतरभक्षणे तु "शेषे तूपवसे दह" रिति **मनु**—
वचनादेकरात्रोपवासः। इदमकामतोद्रष्टव्यम्। कामतो द्वैगुण्यम्।

यत्तु **शङ्खेनोक्तम्**—

"क्षीराणि यान्यभक्ष्याणि तद्विकाराशने वुधः †।
सप्तरात्रं व्रतंकूर्य्या देत त्ते परिकीर्त्तितम्।" ‡

---

* मद्यनिर्म्माणोपकरणात् परित्यक्त मन्नादिकं या गौर्भक्षयति तस्या दुग्धपाने विष्ठादिकं भक्षयन्त्याश्च दुग्धपाने प्रायश्चित्तं कर्त्तव्यम्।

† द्विजः। ख।

‡ तदेतत् परिकीर्त्तितम्। ख।

इत्यपेय-पान-प्रायश्चित्तम्।

अथ चाण्डालाद्यन्न-भक्षण-प्रायश्चित्तं निरूप्यते *।

तत्र **मध्यमाङ्गिराः**—

"अन्त्यावसायिना मन्न मश्नीयाद् य स्त्वकामतः।
सतुचान्द्रायणं कुर्य्या त्तप्तकृच्छ्र मथापिवा॥" इति।

अत्र चान्द्रायणतप्तकृच्छ्रयो र्विषमशिष्टत्वेन † विकल्पासम्भवात् समुच्चयार्थोऽयं वा शब्दः। तेनायमर्थः। प्रथमं चान्द्रायणं कृत्वाऽनन्तरं तप्तकृच्छ्र मपि कुर्य्यात्। तत्र चान्द्रायणे धेनुचतुष्टयं, तप्तकृच्छ्रे धेनुद्वयं, मिलित्वा षट् धेनवः। इदमकामतः। कामतो द्वैगुण्य मिति।

("अभ्यासा दत्र कुर्व्वीत व्रतं षाण्मासिकं व्रती।
अत्यन्ताभ्यासतः कुर्य्याद् वर्षमेकं निरन्तरम्॥" ‡)

यदि चौरादिभि र्भयमुत्पाद्य कश्चित् चाण्डालाद्यन्नं भोज्यते, तदा चान्द्रायण मेव। अथाच **जैमिनि**:—

"अन्त्यान्नं भोज्यते यस्तु चौरै र्म्लेच्छै र्भयङ्करः।
प्रायश्चित्तं कथन्तत्र वर्णे वर्णे विधीयते॥
चान्द्रायणं चरेद् विप्रः क्षत्रः सान्तपनं चरेत्।
षड्रात्र ञ्च त्रिरात्र ञ्च वर्णयो रनुपूर्व्वशः॥"

सान्तपनञ्चात्र विषय-गौरवान्महासान्तपनम्। तत्र धेनुद्वयम्। इदमकामतः कामतो द्वैगुण्यम् §।

यत्तु **बृहद्विष्णुनोक्तम्**—

"चाण्डालान्नं भुक्त्वा त्रिरात्र मुपवसे दिति॥"

तदसिद्ध-तण्डुलादि-भक्षण-विषयम्।

"सिद्धं भुक्त्वा पराकं कूर्य्यादिति॥"

यत्तु तेनैवोक्तम्—

तदज्ञानतो भुक्तोत्तारितविषयमिति। पराके च धेनुद्वयम्।

---

* अथाभक्ष्य-भक्षण-प्रायश्चित्तं निरूप्यते। ख।

† विषयविषमत्वेन। ख।

‡ वन्धणी-क्रोडीकृतः श्लोकः केवलं कपुस्तके दृश्यते।

§ इदमज्ञानाद् ज्ञानतो द्विगुण्यम्। ख।

यत्तु **स्वल्पयमेनोक्तम्**—

"चाण्डालपुक्कषाणान्तु भुक्त्वा गत्वाच योषितम्।
कृच्छ्राब्दमाचरेद् ज्ञानादज्ञानादैन्दवद्दयम्॥"

तदत्यन्ताभ्यासविषयम्। एतच्च चाण्डाली* गमन-प्रायश्चित्तं रेतः सेकात् पूर्व्वमित्यगम्यागमन-परिच्छेदे वक्ष्यामः।

चाण्डालस्पृष्टान्नभक्षणेतु प्राजापत्यम्। **तथाचाङ्गिराः**—

"चाण्डाल-स्पृष्टमन्नन्तु योऽश्नीयाद् ब्राह्मणः क्वचित्।
तस्य शुद्धिं प्रवक्ष्यामि प्राजापत्येन नित्यशः॥ इति।"

तथाच **स्वल्पयमः**—

"कापालिकान्न-भोक्तॄनां तन्नारी-गामिनान्तथा।
कृच्छ्राब्दमाचरेद् ज्ञानादज्ञानादैन्दवद्दयम्॥"

रजकाद्यन्नभक्षणेतु चान्द्रायणम्, तथा**चापस्तम्बः**—

"रजक-व्याध-शैलूष-वेणुचर्म्मोपजीविनाम्।
यो भुङ्क्ते ब्राह्मण स्वान्नं शुद्धि श्चान्द्रायणेनतु॥

चान्द्रायणे धेनुचतुष्टयम्। इदञ्च कामतः। अकामतस्तदर्द्धम्। शूद्राद्यन्न-भक्षणे विशेषमाहापस्तम्बः—

"शूद्रस्यान्न मथर्व्वान्नं शुष्कमांस मकामतः।
भुक्त्वा कृच्छ्रञ्चरेद्विप्रो ज्ञानात् कृच्छ्रद्दयन्तथा॥

ब्राह्मणस्यतु वैश्यान्न-भोजने एतदेव पाद-हीनम्। क्षत्रियान्न-भोजने द्विपाद-हीनम्। एवं क्षत्रियस्य शूद्रान्न-भोजने पादहीनं प्रायश्चित्तम्। वैश्यान्न-भोजने द्विपादहीनम्। वैश्यस्यापि शूद्रान्न-भोजने द्विपादहीनमित्याद्यूहनीयम्।

आपत्कालेतु शूद्रान्न-भक्षणे विशेषमाह **पराशरः**—

आपत्-कालेतु विप्रेण भुक्तं शूद्र-गृहे यदि।
मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्॥"

शूद्र-भाजनस्थान्न-भक्षणे प्रायश्चित्त माह **आपस्तम्बः**—

"शूद्राणां भाजने भुक्त्वा ब्राह्मणस्तु प्रमादतः।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति॥"

इदमकामतः। कामतोद्वैगुण्यमिति।

---

* चाण्डाल्यादि। ख।

शूद्रान्न-भक्षणेऽपि दोषाभावमाह **हारीतः**—

"कन्दुपक्वं स्नेह-पक्वं पायसं दधिशक्तवः ।
एतान्य-शूद्रान्न भुजां भोज्यानि मनुरब्रवीत् ॥"

**आपस्तम्बः**—

"आम मन्नं मधु घृतं धाना क्षीरं तथैवच ।
गुड़-मांस-रसा ग्राह्या निवृत्तेनापि शूद्रतः ॥"

शूद्रस्यतु चर्म्मकाराद्यन्त्यजान्न-भक्षणे विशेषमाह **आपस्तम्बः**—

"शूद्रोऽप्यन्त्यस्यजातीनां कथञ्चिद्भुक्तवान् यदि ।
अहोरात्रोषितो भूत्वा दानं दत्त्वा विशुध्यति ॥

इदमकामतः । कामतो द्वैगुण्यमिति ।

ब्राह्मणस्तु * नट-नर्त्तक-तक्षक-चर्म्मकार-सुवर्णकारादि-व्यापारोपजीविना मन्नं भुक्त्वा प्राजापत्यञ्चरेद् । तथाच **वृहद्यमः**—

नट-नर्त्तक-तक्षण-श्चर्म्मकारः सुवर्णकृत् ।
शौण्डिकाः काण्डिकाः षण्डाः अभोज्यान्नाः प्रकीर्त्तिताः ॥
चर्म्मकाराः कर्म्मिणश्च † सूचका घोषका स्तथा ।
चक्रोपजीवी रजकः कैवर्त्त स्तस्कर स्तथा ॥
ध्वजोपजीविनश्चैव शूद्राध्यापकयाजकाः ।
चित्रोपजीवी शिल्पी च वार्द्धुषी ब्रह्मविक्रयी ॥
वृथाश्रमी तथा यः स्यादाश्रमाणाञ्च भेदकः ।
पुण्यस्य विक्रयी यश्च योनिसङ्करजश्च यः ॥
रङ्गोपजीवी कुण्डाशी परिवित्तिश्च वीरहा ।
भिषजो गरदश्चैव भगजीवी तथैव च ॥
कर्म्मस्वेतेषु यो मोहाद् ब्राह्मणो वर्त्तते सदा ।
प्रायश्चित्ते ह्यनाचीर्णे परिहार्य्यो भवेत् सताम् ॥
तेषान्तु ब्राह्मणो भुक्त्वा कृत्वा चैव प्रतिग्रहम् ।
प्राजापत्येन शुध्येत ततः पापा न्न संशयः ॥

इदञ्च कामतः । अकामत स्त्र्यहमेव ।

---

* क पुस्तकेतु "ब्राह्मण" इति पदं "अन्नं भुक्त्वा" इत्यनन्तरं पठितम् ।

† कर्म्मकाराश्चर्म्मिणश्च । क ।

तथाच मनुः (४।२२२)

"भुक्त्वाऽतोऽन्यतमस्यान्न ममत्या क्षपनं त्र्यहम्।
मत्या भुक्त्वा चरेद् कृच्छ्रं रेतो विण्मूत्र मेव च॥"

तथाच शातातपः—

"क्लीवाभिशस्त-पतितैः सूतिकोदक्य-नास्तिकैः।
दृष्टं नाद्या त्सदन्नन्तु तस्य निष्कृति रुच्यते॥
तद्भुक्त्वोपवसेद्रात्रिं तत्-संस्पृष्टे चतुर्गुणम्।
उच्छिष्टे षड्गुणं प्रोक्त मभ्यासेऽष्टगुणं भवेत्॥" इति।

तथाच व्यासः—

"स्नानार्हस्तु यदास्नान मकृत्वाऽश्नाति वै द्विजः।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥"

रजकादिस्पर्शे आचमनार्हस्य अनाचम्य पाने भक्षणे च

संवर्त्तः—

अनाचान्तः पिबेद्यस्तु यदि वा भक्षयेद् द्विजः।
प्राणायाम स्त्रीणि शतानि* प्रायश्चित्तं विशोधनम्॥"

तथापस्तम्बः—

"मूत्रोच्चारं द्विजः कृत्वा अकृत्वाशौचमात्मनः।
मोहाद् भुक्त्वा त्रिरात्रन्तु यवान् भुक्त्वा † विशुध्यति॥"

तथाच शातातपः—

"अथ भोजन-काले चेदशुचि र्भवति द्विजः।
भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति॥"
भक्षयित्वातु तं ग्रास महोरात्रेण शुध्यति।
अशित्वा सर्व्व मन्नन्तु त्रिरात्रेण विशुध्यति॥"

तथा चतुर्विंशमतम्—

"पिबतो यत् पते त्तोयं भाजने मुखनिःसृतम्।
अभोज्यं तद्भवेदन्नं भुक्त्वा चान्द्रायण ञ्चरेत्॥"

---

* शतानि त्रीणि गायत्र्याः। ख।

† यवान् पीत्वा। ख।

तथाच **हारीतः**—

"विना यज्ञोपवीतेन भुङ्क्ते तु ब्राह्मणो यदि ।
स्नानं कृत्वा जपं कुर्य्या दुपवासेन शुध्यति ॥"

इति अभक्ष्य-भक्षण-प्रायश्चित्तम् ।

अथोच्छिष्ट-भक्षणप्रायश्चित्तं निरूप्यते । तत्र **शङ्खः**—

"ब्राह्मणोच्छिष्ट-भोजने महाव्याहृतिभिः सप्तभि * रभिमन्त्र्यापः पिवेत् क्षत्रियोच्छिष्ट-भोजने ब्राह्मीरस-विपक्वेन त्र्यहं क्षीरेण वर्त्तयेत् । वैश्योच्छिष्ट भोजने त्रिरात्रोपषितो भूत्वा ब्रह्मसुवर्चलां पिवेत् । शूद्रोच्छिष्ट-भोजने षड्रात्र मभोजन मिति ॥"

**यदापस्तम्बेनोक्तम्**—

"ब्राह्मणस्य यदोच्छिष्ट मश्नात्यज्ञानतो द्विजः ।
अहोरात्रञ्च गायत्र्या जपं कृत्वा विशुध्यति ॥"

तद्धीनतर-ब्राह्मणोच्छिष्ट-भक्षण-विषयम् ।

तथाच **बृहद्व्यासः** —

"माता वा भगिनी वापि भार्य्यान्याश्चापि योषितः † ।
न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायण ञ्चरेत् ॥"

समानजातीयभार्य्यायां विशेष माह **अङ्गिराः** —

"ब्राह्मन्या सह योऽश्नीया दुच्छिष्टं वा कथञ्चन ।
न तत्र दोषं मन्यन्ते सर्व्वे एव मनीषिनः ‡ ॥

तथा **चापस्तम्बः**—

"अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः ।
चान्द्रायणं तदर्द्धार्द्धं ब्रह्म-क्षत्र-विशां विधिरिति ॥"

अर्थात् शूद्रस्य पादार्द्धम् § एतच्चाकामतः । कामतो द्वैगुण्य मिति ।

तथा **चाङ्गिराः**—

"चाण्डालपतितादीना मुच्छिष्टान्नस्य भक्षणे ।
द्विजः शुध्येत् पराकेण शूद्रः कृच्छ्रेण शुध्यति ॥"

---

* सप्तभिरिति ख पुस्तके नास्ति ।

† तत्र दोषं न मन्यन्ते सर्व्वेत्वेवमनीषिणः । ख ।

‡ भार्य्या वान्याश्च योषितः । क ।

§ अर्थात् शूद्रस्य पादकृच्छ्रेण शुद्धिः । ख ।

इदमकामतः। कामतो द्वैगुण्य मिति।

तथाच **मनुः**—(११।१५९)

"विड़ाल-काकाद्युच्छिष्टं जग्ध्वाश्व-नकुलस्य च।
केश-कीटावपन्नञ्च पिबेद् ब्रह्मसुवर्च्चलाम्॥

तथाच **बृहस्पतिः**—

"श्व-विड़ाल-जम्बुकाखु-रासभोच्छिष्ट-भोजने।
प्राणायाम-शतं कृत्वा घृतं प्राश्य विशुध्यति॥"

यत्तु **शङ्खेनोक्तम्**—

"शुनोच्छिष्टं तथा भुक्त्वा मास मेकं व्रती भवेत्।
काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत्॥"

तत् कामतोऽत्यन्ताभ्यास-विषयम्। तथाच **बृहद्यमः**—

"उदक्यया तु संस्पृष्टं गवाघ्रातञ्च यद् भवेत्।
काक-कुक्कुट-संस्पृष्टं शुक्तं वा कृमि-संयुतम्॥
अभोज्यं तद्द्विजातीनां धर्म्मराजवचो यथा॥"

तथा **देवलः**—

"विशुद्धमपि चाहार मक्षिका-कृमि-जन्तुभिः।
केश-लोम-नखै र्वापि दूषितं परिवर्जयेत्॥

तथाच **मनुः**—(४।२०७)

"कैशकीटावपन्नञ्च पदास्पृष्टञ्च कामतः॥
भ्रूणघ्नावेक्षित ञ्चैव संस्पृष्टञ्चाप्युदक्यया।
पतत्रिणावलीढ़ञ्च शुना संस्पृष्ट मेवच॥ (४।२०८)
गवाचान्नमुपघ्रातं घुष्टान्नञ्च विशेषतः। (४।२०९)
भुक्त्वाऽतोऽन्यतमस्यान्न ममत्याक्षपणं त्र्यहम्।
मत्या भुक्त्वाचरेत् कृच्छ्रं रेतो विण्मूत्र मेवच॥ (४।२२२)

अज्ञानतस्तु क्षुद्रदोषदुष्टान्न-भक्षणे संवत्सरस्य मध्ये प्राजापत्यं प्रायश्चित्तम्। ज्ञानेतु यथोक्तविशेषप्रायश्चित्तम्।

तथाच **मनुः**—

"संवत्सरस्यैक मपि चरेत् कृच्छ्रं द्विजोत्तमः।
अज्ञानाद्भुक्तशुध्यर्थं ज्ञातस्यतु विशेषतः॥"

अथ सूतक-मृतकान्न-भक्षण-प्रायश्चित्तम् । तत्र **मार्कण्डेयः**—

"भुक्तातु ब्राह्मणाशौचे चरेत् सान्तपनं द्विजः ।
क्षत्रः ( क्षात्रे ) कृच्छ्रेण शुध्येत महासान्तपनं विशः

अत्र याज्ञवल्क्योक्तं द्व्यहसाध्यं सान्तपनं ग्राह्यम् ।

"भुक्तातु क्षत्रियाशौचे तथा कृच्छ्रो विधीयते ।
वैश्याशौचे तथा भुक्ता महासान्तपनं चरेत् ॥"

अत्र धेनुद्वयम् ।

"शूद्राशौचे तथा भुक्ताद्विजश्चान्द्रायणं चरेत् ॥"

अत्र धेनुचतुष्टयम् । इदं कामतः अकामतोऽर्द्धम् ।

"अशौचे यस्य यो भुङ्क्ते सोऽप्यशुद्ध स्तथा भवेत् ।
तावद् यावदशौचन्तु तस्याशौचं प्रकीर्त्तितम् ।
तस्याशौचस्यापगमे प्रायश्चित्तं समाचरेत् ॥"

एकादशाहद्वादशाहादिश्राद्धभोजने प्रायश्चित्तमाह **शङ्खः**—

"चान्द्रायणं नवश्राद्धे पराको मासिके मतः ।
पक्षत्रयेऽतिकृच्छ्रं स्यात् षण्मासे कृच्छ्र मेवच ।
आब्दिके पादकृच्छ्रं स्या देकाहः पुनराब्दिके ॥"

पुनराब्दिकशब्देन च वार्षिकश्राद्धाद् द्वितीयेह्नि यत् श्राद्धं तदुच्यते* ।

तदुक्तम्—

"पूर्व्वेद्यु र्वार्षिकं श्राद्ध मपरेद्युर्द्विवार्षिकमिति ॥"

तथा **चाङ्गिराः**—

"याजकान्नं नवश्राद्धं संग्रहे चैव भोजनम् ।
नारी-प्रथम-गर्भेच भुक्ता चान्द्रायणं चरेत् ॥"

संग्रह-भोजनं गणान्न-भोजनम् । नारी-प्रथम-गर्भः पुंसवनम् ।

तथाच **सुमन्तुः**—

"पुनर्भूः पुनरेताच रेतोधाः कामचारिणी ।
आसामन्नं न भोक्तव्यं भुक्ता चान्द्रायणं चरेत् ॥
अन्यदत्तातु याकन्या अथान्यस्मै प्रदीयते ।
तस्यास्यैव न भोक्तव्यं पुन र्भूः परिकीर्त्तिता ॥

---

* द्वितीयदिनेतु काम्यश्राद्धम् । ख । † परेद्यु: पुनराब्दिक मिति । ख ।

पूर्व्वं प्रसवितो यस्या गर्भश्चैव न संस्मृतः।
द्वितीये गर्भसंस्कारे पुनरेताच सोच्यते॥
न दधौ दशवर्षाणि यावत्तिष्ठत्यगर्भिणी।
पश्चाद्विधारितं रेतो रेतोधा स्चैव कीर्त्तिता॥
भर्त्तुः शासनमुल्लङ्घ्य या स्त्री चान्येन वर्त्तते।
तस्याश्चैव न भोक्तव्यं विज्ञेया कामचारिणी॥

भिन्न-कांस्य-भोजने त्वापस्तम्बः—

भिन्नकांस्ये तु वै विप्रो यदि भुङ्क्ते च कामतः।
उपवासेन चैकेन पञ्चगव्येन शुध्यति॥"

अथ लशुनादि-भक्षण-प्रायश्चित्तं निरूप्यते।

तत्र बृहद्यमः—

"लशुनं गृञ्जनञ्चैव पलाण्डुं कवकन्तथा।
चत्वार्य्यकामतो जग्ध्वा तप्तकृच्छ्रञ्चरेद् द्विजः॥"

अत्र धेनुद्वयम्। तथा,—

"छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम्।
कवकानि तथा भुक्त्वा द्विज श्चान्द्रायणं चरेत्॥"

इदं कामतः। अत्र धेनुचतुष्टयम्। यत्तु बृहद्विष्णुनोक्तम्—

"लशुन-पलाण्डु-गृञ्जन-छत्राक भक्षणे चान्द्रायणं प्रायश्चित्तं, प्रायश्चित्तान्ते पुनः संस्कारं कुर्य्यादिति॥" तत् कामतोऽत्यन्ताभ्यास-विषयम्। तथा च बृहद्यमः—

"क्षुद्रवार्त्ताकु-कुम्भीका-श्मशान-प्रभवाणि च।
भूस्तृणञ्चैव शिग्रूकं पलाण्डु-कवकानि च॥
एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद्द्विजः॥"

तथापस्तम्बः—

"भक्षयेद्यस्तु नीलीन्तु प्रमादाद् ब्राह्मणः क्वचित्।
चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः॥"

अनुक्त-प्रायश्चित्ते निषिद्ध-शाक-मूल-भक्षणे तु—"शेषेषूपवसेदह रिति" मनु-वचनादेकाहोपवास एव प्रायश्चित्तम्।

अथा-भक्ष्य-मांसादि-भक्षण-प्रायश्चित्तं निरूप्यते। तत्र प्रचेताः—

श्व-शृगाल-काक-कुक्कुट-दंष्ट्रि-वानर-क्रव्याद-वृक-खरोष्ट्र-गज-वाजि-विड्वराह-गो-मानुषमांस-भक्षणे तप्तकृच्छ्रमादिशेत् । एषां मूत्र-पुरीष-भक्षणे त्वति-कृच्छ्रम् ॥" तप्तकृच्छ्रश्चात्र द्वादशाहसाध्योऽभिप्रेतो विषय-गौरवात्, नतु चतुरहः साध्य इति तप्तकृच्छ्रातिकृच्छ्रयोर्व्रतभेदेऽपि धेनुसङ्कलनायां प्रत्येकं धेनुद्वयमेव। इदञ्च कामत एव। यच्चेदं **प्रचेतसोक्तम्**—

"श्व-शृगाल-काक-कुक्कुट-दंष्ट्रि-क्रव्याद-शिशुमार-वानर-खरोष्ट्र-गज-वाजिविड्-वराह-गो-मानुष-मांसभक्षणे चान्द्रायणञ्चरेदिति ॥"

तत् कामतोऽभ्यासविषयम्। यच्च **शंखिनोक्तम्**—

"भुक्ता चोभयतो दन्तान् तथाचैकशफानपि ।
दंष्ट्रिणश्च तथा भुक्ता षण्मासं व्रतमाचरेत् ॥"

तत् कामतोऽत्यन्ताभ्यासविषयम्। यच्च **प्रचेतसोक्तम्**—

"कामतो रेतो-मूत्र-पुरीषाणां प्राशने चान्द्रायणं पुनः संस्कारश्च इति ॥"

तदप्यत्यन्ताभ्यासविषयम्। तथाच **व्यासः**—

"नकुलं मूषिकञ्चैव सर्प-मण्डूकमेवच ।
विकृतां श्चैव मत्स्यांश्च जग्ध्वा कृच्छ्रं समाचरेत् ॥"

तथाच **हारीतः**—

"भक्ष्याणामप्याममांस-रुधिरभक्षणे त्रिरात्रं पञ्चगव्यञ्च । इति ।"

इदङ्कामतः। अकामतस्तदर्द्धम्। तथा **कात्यायनः**—

"गो-वृकैकशफ-क्रौञ्च-कलविङ्क-शुक-प्लवाः ।
भासोऽथ चाष-सारङ्ग-हंस-सारस-टिट्टिभाः ॥
बलाका-बक-दात्यूह-श्येन-वायस-कोकिलाः ।
जीवञ्जीवक-चक्राह्व-ग्रामकुक्कुट-शूकराः ॥
शतपत्र-मद्गु-कुरर-रज्जुवाल-कपिञ्जलाः ।
रक्तपादमुखोलूक-गृध्र-प्रतुद-चातकाः ॥
चकोर-सारिका-कङ्क-कोयष्टि-नखविष्किराः ।
खञ्जरीटक-काकोल-भृङ्ग-पारावतादयः ॥
अभक्ष्या येप्यविज्ञाता ये च रक्तपरिस्रवाः ।
मुक्ता तु खड्गि-शशक-गोधा-शल्लकि-कच्छपान् ।
श्वाविधः परिशेषोऽन्यो वर्ज्यः पञ्चनखो गणः ॥"

तथा च **देवलः**—

"जलौका-शुक्ति-शम्बूक-शिशुमारक-कर्कटाः।
मत्स्याश्च विकृताकाराः सर्पशीर्षा दरीशयाः॥
जालपादाखु-मार्ज्जारा स्तथा पाण्डु-कपोतकाः।
हारीतो गवयश्चैव नैव भक्ष्या द्विजादिभिः॥"

अत एतानेव सङ्कीर्त्त्य "एकरात्रोपवासो गायत्र्यष्टसहस्रजप इति" **सुमन्तुना** प्रायश्चित्तमुक्तम्। तदकामतो भक्षणविषयं द्रष्टव्यम्।

यत्तु **बृहद्विष्णुना**—एतान्येव संकीर्त्त्य, "भक्षणे त्रिरात्रमुपवसेत्" इत्युक्तं तत् कामतो भक्षण-विषयम्।

यच्च **मनुना**—(११।१५३)

"अभोज्यानान्तु भुक्तान्नं स्त्रीशूद्रोच्छिष्टमेव च।
जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं पयः पिवेत्॥" *

इत्युक्तं तत् कामतोऽत्यन्ताभ्यासविषयम्। अनिषिद्ध-मत्स्य-मांस-भक्षणेतु दोषाभावात् प्रायश्चित्ताभावः।

यत्तु

"वृथा मांसं न भोक्तव्यं भोक्तव्यं श्राद्धकर्म्मणि। †
अन्यथा भक्षयन् विप्रः प्राजापत्यं समाचरेत्॥"

इति **छागलेयेनोक्तम्**—

यत्तु—

"मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं भवेत्॥" ‡

इति **याज्ञवल्क्येनोक्तम्** (१।१७५)

यदपि

"नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः॥"

इति **मनुनोक्तम्**—(५।३३)

---

* अत्र च "पयः पिवेत्" इतिपाठः न मेधातिथि-प्रभृति-टीकाकृतां सम्मतः। तैस्तु "सप्तरात्रान् यवान् पिवेत्" इत्येवं पठितः। "जलमिश्रितशक्तुरूपेण यवागूरूपेण वा यवान् पान-योग्यान् कृत्वा सप्तरात्रं पिवेत्" इति कुल्लूकभट्टचरणानां व्याख्या।

† वृथा मांसं न भोक्तव्यमन्यत्र श्राद्धकर्म्मणि। ख।

‡ "सोपवासस्त्र्यहं वसेत्" इति मिताक्षरादि-सम्मतः पाठः।

यदपि

"कुहू-पूर्णेन्दु-संक्रान्त्यां चतुर्द्दश्यष्टमीषु च।
नरश्चाण्डाल-योनिः स्यात् स्त्री-तैल-मांस-भक्षणात्॥
श्राद्धे प्रदत्तं विधिना दैवे चाभ्यर्थितो द्विजैः।
उपाकृतं महारोगान्मांसं भक्षीत नान्यथा॥"

इति **व्यासेनोक्तं**, तत् सर्व्वं निषिद्ध-चतुर्द्दश्यादिविषयम्।

अन्यथा सामान्येनैवाभक्ष्यत्वे सति तिथि-विशेषे निषेधस्यानर्थक्य-प्रसङ्गात्। किञ्च मत्स्यादि-परित्यागे फल-श्रुतिरप्यभक्ष्यत्वे सति नोपपद्यते। तथा च **याज्ञवल्क्यः**—(१।१८०)

"सर्व्वान् कामानवाप्नोति हयमेधफलन्तथा।
गृहेपि निवसन् विप्रो मुनि मांस-विवर्ज्जनात्॥"

अतो मत्स्य-मांस-भक्षणे दोषाभाव एवेत्यवगम्यते। यत्तु **मनुनोक्तम्**—(११।९६)

"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्।
तद् ब्राह्मणे न भोक्तव्यं देवानां भुञ्जता हविः॥" इति। *

तदपि आम-मांसाभिप्रायेणैव। आममांसस्यैव राक्षसान्नत्वेन नानागमेषु प्रसिद्धत्वात्। इति अभक्ष्यभक्षण-प्रायश्चित्तम्।

इदानीं ब्रह्मचारिणोऽपेयाभक्ष्यपान-भक्षणप्रायश्चित्तं निरूप्यते।

तत्र **शातातपः**—

"सूतके तु यदा विप्रो ब्रह्मचारी विशेषतः।
पिबेत् पानीयमज्ञानादश्नीयात् संस्पृशेत्तथा॥
पानीयपाने कुर्व्वीत पञ्चगव्यस्य भक्षणम्।
त्रिरात्रं भोजने प्रोक्तं स्पृष्टे स्नानं विधीयते॥

तथा च **वृहद्यमः**—

"मधुमांसञ्च योऽश्नीयात् शावं सूतकमेवच।
प्राजापत्यञ्चरेत् कृच्छ्रं व्रतशेषं समापयेत्॥

* तद् ब्राह्मणेन नात्तव्यमिति मेधातिथिकुल्लूकभट्टादिसम्मतः पाठः। आसूयते इत्यासवः मद्यानामवस्था-विशेषः सद्यः कृत-सन्धानः सञ्जात-मद्य-भावः।

न केवलं ब्रह्मचर्य्येष्वेव सर्व्वत्र तेष्वेवं द्रष्टव्यम्। यत्र यत्र मध्वामिषभक्षणं नास्ति। तथाच **बृहद्विष्णुः**—

"आमश्राद्धाशने त्रिरात्र मुपवसेत्॥" इति॥

इदञ्च "काममभ्यर्थितोऽश्नीयात् श्राद्धं व्रतमपीड़यन्॥"

इतिवचनेन ब्रह्मचारिणः श्राद्धभोजनस्य विहितत्वात् शूद्रकृत-श्राद्धाभिप्रायम्। ब्राह्मणस्यापि मासिक-श्राद्ध-भक्षणे त्वाह **यमः**—

मासिकान्नन्तु योऽश्नीया दसमावर्त्तितो द्विजः।
त्रिरात्र मुपवासोऽस्य प्रायश्चित्तं विधीयते
प्राणायाम-शतं कृत्वा* घृतं प्राश्य विशुध्यति॥"

अत्र च मासिक-शब्देन प्रेत-श्राद्धं सर्व्वमेवाभिप्रेतं द्रष्टव्यम्। तथाच **समन्तुः**—

"ब्रह्मचारिणो लशुन-पलाण्डु-गृञ्जन-कुम्भीक-शाव-सूतकान्न-मधुमांस-रेतो-मूत्र-पुरीषामिध्य भक्षणे तप्तकृच्छ्रं पुनरुपनयन ञ्च॥" इदमकामतः। तथा **स्वल्पहारीतः**—

"अगुरूच्छिष्टमश्नीयात् ब्रह्मचारी कथञ्चन।
स्नात्वा मौनोपवासेन पञ्चगव्येन शुध्यति॥"

इदं सवर्णे। तथा **हारीतः**—

"उच्छिष्टं क्षत्रिय-विशोः शूद्रस्यापि कथञ्चन।
ब्रह्मचारी यदाश्नीयात् शुद्धिस्तस्य कथं भवेत्॥
उपवासां स्तु त्रीन् षड्वा द्वादशाहं पृथक् पृथक्।
कृत्वा शुद्धि मवाप्नोति ब्रह्मचारी न संशयः॥"

क्षत्रिय-विटः (शोः) शूद्रोच्छिष्टाशने यथा-योगमत्र द्रष्टव्यम्।

तथा च **स्वल्पहारीतः**—

आमिषस्यतु यो भाण्डे पक्वमश्नाति सुव्रतः।
कुशमूल-विपक्वेन त्र्यहं क्षीरेण वर्त्तयेत्॥" इति।

ब्रह्मचार्य्युक्त-प्रायश्चित्तमेव विधवादीनां मत्स्य-मांस-भक्षणे द्रष्टव्यम्॥†

---

* कुर्य्यात्। क।

† विधवानियमस्तु उद्वाहचन्द्रालोके—"स्मृतिसारे भगवद्वाक्यम्—"ब्रह्मचर्यं प्रवक्ष्यामि शृणु विप्र यतात्मना। पत्यौ मृते द्विजातीया संयतात्मा गृहे वसेत्॥ उत्क्षिप्याभरणं सर्व्वं सुखं भोग्यञ्च संत्यजेत्। आमरणान्तमामिष्यं न भुञ्जीत कदाचन॥ मत्स्यं मांसञ्च ताम्बूलं कांस्यपात्रे च भोजनम्। मसूरं राजमाषञ्च विधवा परिवर्ज्जयेत्॥ यदपि, संवत्सरं प्रेतपत्नी मधुमांसं विवर्जयेत्। अधः

इदानीं रहस्यकृत-सुरापानादि-प्रायश्चित्तं निरूप्यते। अत्र शृङ्गग्राहिकतया प्रायश्चित्तविशेषानुपदेशात् कामतो मरणान्तिकमेव। अकामत स्तु रहःकृत-सुरापाने सकल-महापातक-साधारणं यत् **मनुनोक्तम्**—(११।२५८)

"महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः।
अभ्यस्याब्दं पावमानीं * भैक्षाहारो विशुध्यति॥"

तदेवात्र द्रष्टव्यम्। एतच्च ब्रह्मवध-परिच्छेद एव प्रपञ्चितम्। यदप्यपरं **मनुनोक्तम्** (११।२८९)

"अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम्।
मुच्यते पातकैः सर्व्वैः पराकैः शोधित स्त्रिभिः॥" इति॥

तदपि सकल-महापातक-साधारणम्। "एनसि लघुनि लघूनि गुरुणि गुरूणीति" वचनानुसारेण तक्रादिमिश्रितोपलभ्यमानगन्ध-रस-सुरापान-विषयं योजनीयम्। यत्तु **याज्ञवल्क्येनोक्तम्** (३।३०४)

"त्रिरात्रोपोषितो भूत्वा (हुत्वा) कुष्माण्डीभि र्घृतं शुचिः।
सुरापी स्वर्णहारी च रुद्रं जप्त्वा जले स्थितः †॥" इति॥

तत्तक्रादिमिश्रितानुपलभ्यमानगन्धरससुरापानविषयम्। सुरेतरमद्यपाने रहस्यप्रायश्चित्ते इतराभक्ष्यभक्षणे च लघुगुरुपापभेदेन प्राणायामशतादिक-मेवोहनीयमिति।

---

शयीत षण्मासानिति मौद्गल्यभाषितमिति बौधायनवचनं, तद्द्विजातिविधवाभिन्न-परम्। व्यवहारोऽपि तथा।" अपरमपि अस्मत्प्रदेशेषु शूद्रादिजातीया विधवा पत्युर्मरणे संवत्सरपर्य्यन्तमामिषं न भक्षयन्ति एकादश्याद्युपवासञ्च कुर्व्वन्ति। किञ्च द्विःखिन्नमन्नं पूर्व्वोत्तर-वङ्गेषु द्विजातिविधवाः कदापि नाभ्यवहरन्ति। अत्र बृहद्धर्म्म-पुराणीयं प्रमाणं गुरु-मुखादवगतम्—"द्विःखिन्नमन्नं पृथुकं शुद्धं देशविशेषके। नात्यन्तशस्तं विप्राणां भोजने च निवेदने। अभक्ष्यं विधवानाञ्च यतीनाञ्चैव सर्व्वशः॥

* पावमानीं स्वनामप्रसिद्धवेद-मन्त्रविशेषम्।

† त्रिरात्रोपोषितो हुत्वा कुष्माण्डीभि र्घृतं शुचिः।
ब्राह्मण-स्वर्णहारी तु रुद्रजापो जले स्थितः॥ इति मिताक्षरायां पाठः। विज्ञानेश्वरेण तु एत-द्वचन-पूर्व्वार्द्धेन सुरापान-प्रायश्चित्तं व्यवस्थाप्य उत्तरार्द्धेन सुवर्णस्तेय-प्रायश्चित्तं व्याख्यातम्। यथा "क्रमप्राप्तं सुरापान-प्रायश्चित्तमाह—"सुराप श्चत्वारिंशद्घृताहुतीरित्यनुवर्त्तते। त्रिरात्रमुपोषितः कुष्माण्डोभिः यद्देवादेवहेडन मित्यादिभिः कुष्माण्डदृष्टाभि रनुष्टुब्भि र्मन्त्रलिङ्गदेवताभि र्ऋग्भि श्चत्वारिंशद्घृताहुती र्हुत्वा शुचि र्भवेत्।

ब्राह्मणस्वर्णहारी पुन स्त्रिरात्रोपोषितः जलमध्यस्थो "नमस्ते रुद्रमन्यवे" इति शतरुद्रीयजपयुक्तः शुध्यतीति।

तथाच **मनुः**—

"प्राणायामशतं कार्य्यं सर्व्वपापापनुत्तये।
उपपातक-जानामनादिष्टस्य चैव हि॥"

इति रहस्यकृतसुरापानप्रायश्चित्तम्। इति बालवलभिभुजङ्गापरनाम्नो भट्टश्रीभवदेवस्य कृतौ प्रायश्चित्त-प्रकरणे ऽभक्ष्यभक्षण-परिच्छेदः समाप्तः।

इदानीं स्तेयप्रायश्चित्ते निरूपणीये महापातकत्वेन गुरुत्वात् प्रथमं सुवर्ण-स्तेयप्रायश्चित्तमेव निरूप्यते। तत्रानिरूपिते स्तेयशब्दार्थे स्तेयप्रायश्चित्ता-निरूपणात् प्रथमं स्तेयशब्दार्थ एव निरूप्यते। किमिदं स्तेयं नामेति? तत्रान्यायेन परस्वग्रहणं स्तेयमिति लोकप्रसिद्धमेव। स्वत्वञ्च विनियोगार्हत्वम्। ग्रहणञ्च स्वस्वत्वापादानम्। तेन परकीये यथेष्टविनियोगानर्हे* द्रव्ये तदनुमतिव्यतिरेकेणान्यस्य यथेष्टविनियोगार्हत्वापादनं स्तेयम्। यथाक्रय-णादिना पूर्व्वस्वामिनः स्वत्वविनाशेनोत्तरस्वामिनः स्वत्वापादनं तथा स्वविनियोगाभिसन्धानपूर्व्वक-स्थानान्तर-सञ्चारणादि-व्यापारेण पूर्व्वस्वामिनः स्वत्व-निरासेन चौरस्यापि स्वत्वापादनम्।

न चैवं चौरस्यापि स्वत्वे सति पूर्व्वस्वामिनः पुन स्तद्द्रव्यग्रहणे तस्यापि स्तेयित्व-दोषभागित्व मिति वाच्यम्। चौरोत्पादित-स्वत्वस्य द्रव्यस्य पूर्व्व-स्वामिनः† पुनः स्वत्वोत्पादने दोषाभावप्रतिपादनात्।

तथा च **नारदः**—

"द्रव्यमस्वामि-विक्रीतं पूर्व्वस्वामी समाप्नुयात्।
प्रकाशे क्रीणतः शुद्धिः क्रेतु स्तेयं रहः क्रयात्॥‡ इति॥

अत्रायमस्वामिशब्दः पूर्व्वस्वामि-प्रशंसार्थः, उत्तरस्वामिनिन्दार्थः।
यथा "अपशवोऽन्ये गोऽश्वेभ्यः पशवो गोऽश्वा" इति।

यदि तूत्तरः§ स्वामित्व न भवेत्, तदा स्वामी समाप्नुयादित्येतावतैव विवक्षितार्थसमाप्तौ पूर्व्वस्वामीतिवचनमनर्थकं स्यात्।

तथा च **याज्ञवल्क्यः**—(२।१६८)

"स्वं लभेतान्यविक्रीतं क्रेतुर्द्दोषोऽप्रकाशिते।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः॥"

---

* यथेष्टविनियोगार्हे। क। † पूर्व्वस्वामिना। ख।

‡ प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहः क्रये। ख।

§ यदीतरः। क।

तथाह—

"बलाद् ये कामकारेण गृह्णन्ति स्वं निरन्तरम्।
तेषां बलेन हर्त्तव्यं दोषो नेत्यब्रिरब्रवीत्॥"

इत्येवमादि। किञ्च सुवर्णकार स्तावत् सुवर्णचौर इति स्थितम्। तस्य सुवर्णमविगानेन सर्व्वे एव क्रीणन्ति।* यद्यपहारेण स्वत्वं न भवति तदा सन्देहेनापि सुवर्णकार-सुवर्णं केनापि न क्रीयेत। क्रीयते च सर्व्वै रविगानेन तेन चौरादपि चौर्य्यं स्वत्वापादकमेव इति। अतः परकीय-यथेष्ट-विनियोगार्हे द्रव्ये तदनुमतिव्यतिरेकेनान्यस्य यथेष्ट-विनियोगार्हत्व-प्रतिपादनं स्तेयमिति सिद्धम्।† अत्र च ब्राह्मण-सम्बन्धिन एव सुवर्णस्यापहरणं महापातकम्। तथा च **प्रचेताः**—

"अथ महापातकान्याचक्षते, ब्राह्मणवधः, सुरापानम्, ब्राह्मण-स्वर्णहरणम्, गुरुदाराभिगमनम्, संयोगश्च तैरिति॥"

तथा च **वशिष्ठः**—

"पञ्च महापातकान्याचक्षते। गुरुतल्पगमनम्, सुरापानम्, ब्रह्महत्या, ब्राह्मणस्य सुवर्णहरणम्, पतित-संयोगश्चेति।"

सुवर्णशब्दश्चात्र न जातिवचनः‡ किन्तु परिमितहेमजातिवचनः।

तथा च **मनुः**—(८।१३४)

"पञ्च कृष्णलको माषा स्ते सुवर्ण स्तु षोड़श।

**याज्ञवल्क्योऽप्याह**—(१।३६२)

"जालसूर्य्यमरीचिस्थं त्रसरेणू रजःस्मृतम्।
तेऽष्टौ लिक्षा स्तु ता स्तिस्रो राजसर्षप उच्यते॥
गौर स्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः।
कृष्णलः पञ्च ते माष स्ते सुवर्णस्तु षोड़श॥" इति॥ (१।१६२)

न च जातिमात्रवचनत्वे परिमितहेमवचनत्वे च सति विनिगमनायां प्रमाणाभावः। परिमाणोपदेशस्यैव विनिगमना-प्रमाणत्वात्§।

---

* तस्य च सुवर्ण मविगतेनैव सर्व्वे क्रीयते। ख।

† प्रसिद्धम्। क।

‡ न जाति-मात्र-परः। ख।

§ विवादास्पदयोः पक्षयो रेकतर-समाश्रयणी युक्ति र्विनिगमना।

न हि स्मृतिकाराणां सुवर्ण-शब्दस्य परिमित-हैमाभिधानोपदेशो विधिनिषेध-प्रवृत्ति-निवृत्ति-प्रयोजन-व्यतिरेकेणान्यथोपपद्यते, इति परिमितहैमवचनत्व-मेवात्र सुवर्णशब्दस्येति। एतेन ब्राह्मणसम्बन्धिन्यूनसुवर्णहरणं क्षत्रियादि-सम्बन्धि-सम्पूर्ण-सुवर्ण-हरणमुभयमपि न महापातकम्। किन्तूपपातकमेव। तथा सर्व्वत्रैव "ब्राह्मणसुवर्ण-हरणमिति"-स्मरणात् ब्राह्मण-जाति-मात्रग्रहणम्। ननु ब्राह्मणवध इव सवनस्थादिविशेषेण प्रायश्चित्तोत्कर्षापकर्ष इति।

इदानीं प्रायश्चित्तं निरूप्यते। तत्र **संवर्त्तः**—

"स्तेयं कृत्वा सुवर्णस्य राज्ञे शंस्यात् किल्विषम् *
ततो मुषलमादाय सकृद्धन्यात्तु तं स्वयम्।
यदि जीवति स स्तेन स्ततः पापात् प्रमुच्यते॥

मृतस्तावत् पापात् प्रमुच्यत एव। यद्यायुःशेषवशाज्जीवति तथापि मुच्यते इत्यर्थः। मुषलञ्चात्रायसं गृहीत्वा स्वयमेव राज्ञे दातव्यम् तथा च **शंखः**—

"सुवर्णस्तेन: प्रकीर्ण-केश आयसं मुषलमादाय राजानमुपतिष्ठेत् †।" राज्ञा चावश्यमेव हन्तव्यः। अहनने दोष-श्रवणात्।

तथा च **गौतमः**—

"अघ्नन्नेनस्वी राजेति॥" एतच्च वर्णचतुष्टयस्यैव साधारणं प्रायश्चित्तम्। वर्णविशेषेण प्रायश्चित्त-विशेषाश्रवणात्।

ननु मरणान्तिकमिदं प्रायश्चित्तं ब्राह्मणस्यैव मनुनोक्तम्?

तथा च **मनुः**—(११।१००)

"सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु।
स्वकर्मख्यापनं कुर्य्यात् ‡ मां भवाननुशास्त्विति॥
ततो मुषलमादाय सकृद्धन्यात्तु तं स्वयम्।
वधेन पूयते स्तेनो ब्राह्मणस्तपसैव च §॥" इति।

नैवं मनुवचनस्याप्यस्य वर्णचतुष्टयसाधारण-प्राणान्तिक-प्रायश्चित्तोपदेश-कत्वात्। तथा हि इयमस्य योजना,—सुवर्णस्तेयकृद् यः कश्चिद् ब्राह्मणादिः स

---

* शंसीत किल्विषम्। क।

† सुवर्णस्तेयी प्रकीर्णं केशं कृत्वा आयसमुषलमादाय राजानमुपतिष्ठेत्। ख।

‡ स्वकर्मख्यापयन् ब्रूयात्। मनुसंहितायां पाठः।

§ गृहीत्वा मुषलं राजा सकृद्धन्यात्तु तं स्वयम्।
वधेन शुध्यति स्तेनो ब्राह्मणस्तपसैव तु॥ इति संहितायां पाठः।

राजानमभिगम्य स्वकर्म्माख्याप्य राज्ञे मुषलमर्पयेत्। स च राजा तं हन्यात्। ततश्च मृतः शुद्धो भवति। विप्रस्तु ब्राह्मणः षड़ङ्गवेदवित् तपसैव केवलेन विशुद्धो भवति। उपक्रमपठितस्यापि विप्रशब्दस्यान्तपठितेन ब्राह्मणशब्देन सम्बन्धः। इतरथा विप्रस्य मरणान्तिकमभिधाय ब्राह्मणमात्रस्य केवलेन तपसा विशुद्धि-प्रतिपादनमसमञ्जसमेव स्यात्। तपश्चात्र द्वादशवार्षिकमेव।

तथा च **मनुः**—(११।१०१)

"तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम्।
चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महणो व्रतम्॥"

अथवा राजदत्तेन ताम्रमयशस्त्रेणात्मानं व्यापादयेत्। तथा च **वशिष्ठः**—

"ब्राह्मणो ब्राह्मणस्य सुवर्णहरणे प्रकीर्य्य केशान् राजानमभि याचेत, स्तेनोऽस्मि भोः शास्तु मां भवानिति। ततस्तस्मै राजौड़म्बरं शस्त्रं दद्यात्। तेनात्मानं घातयेत्। पूतो भवतीति ज्ञायते॥" तथा परमपि तेनैवोक्तम्— "निष्कालको(?) वा घृताक्तो वा गोमयाग्निना पादप्रभृत्यात्मानं दाहयेत्। पूतो भवतीति ज्ञायते॥"

एतच्च ज्ञानतः, अज्ञानतस्तु द्वादशवार्षिकमेव। तथा च **शङ्खः**—

"अधःशायी जटाधारी पर्ण-मूल-फलाशनः।
एककालं समश्नानो वर्षे तु द्वादशे गते॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुध्यन्ति महापातकिन स्त्विमे॥" इति॥

एतच्च ब्राह्मणमात्रस्य प्रायश्चित्तम्। क्षत्रियादीनान्तु—

"विप्रेतु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते॥"

इति साधारण-वृहद्विष्णुवचनानुसारेण पादपादहानि र्द्रष्टव्या। षड़ङ्ग-वेदविद् ब्राह्मणस्य तु ज्ञानत एव द्वादशवार्षिकोपदेशादज्ञानतस्तदर्द्धं षड़्-वार्षिकमेव। न चाज्ञानतः सुवर्णापहरणं न सम्भवति। ताम्रादि-भ्रमेणा-पहृत्यान्यस्मै दत्तस्य चौरान्तरापहृतस्य वा पश्चात् सुवर्णत्वावगमेप्यज्ञानेना-पहारसम्भवात्।

यत्तु **वालकेन** वस्त्रादि-निवद्ध-सुवर्णनयनेऽप्यज्ञानतः सुवर्णस्तेय इत्युक्तं तत् स्तेयशब्दार्थापरिज्ञानेनैव। परकीये हि द्रव्ये तदनुमतिव्यतिरेकेण यथेष्ट-

विनियोगार्हत्वापादनं स्तेय इत्युक्तम्। न च तत्र वस्त्रादिवद्वसुवर्णे यथेष्ट-विनियोगार्हत्वापादनमस्ति येन तस्यापि स्तेयं भवेत्।* यदि तु ज्ञाते † न समर्पयति तदानीं ज्ञानत एव स्तेयत्वमुपजातं न त्वग्रतः ‡। समर्पणे तु स्तेयाभावान्न दोष इति। यदा पुनर्ज्ञानतोऽपहृत्य पश्चात् संजातबाधकः सुवर्णं समर्पयति परित्यजति वा तदा त्रैवार्षिकमेव। ननु परकीये द्रव्ये तदनुमति-व्यतिरेकेण यथेष्ट-विनियोगार्हत्वापादनं स्तेयम्। तच्च पश्चात् समर्पणे परित्यागे वा § पूर्व्वं जातमेवेति प्राणान्तिकमेवोचितं तत् कथं त्रैवार्षिक मुच्यते? उच्यते, मरणस्येव व्रतसमुच्चितस्य परित्यागस्यापि पापक्षय-हेतुत्व-प्रतिपादनात्। तथा च **सुमन्तुः**—**

"सुवर्ण-स्तेयी द्वादशरात्रं वायुभक्षः पूतो भवति द्रव्य-त्यागेन चेति॥" इदं प्रायश्चित्ताल्पत्वात् स्तेयानन्तरमेव परित्यागे सति द्रष्टव्यम्। चिरावस्थित-यथेष्ट-विनियोगार्हत्वापादनस्य तु गुरुत्वात् त्रैवार्षिकव्रतसमुच्चितस्यैव परित्यागस्य पापक्षय-हेतुत्वम्। नापि द्वादशवार्षिक-समुच्चितस्य।

"तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम्।
चीरवासा द्विजोऽरण्ये चरेद् ब्रह्महनो व्रतम्॥"

इत्यनेन **मनुना** (११।१०२) तपोमात्रापनेय-ब्रह्मवध-पाप-विषयत्वेन द्वादशवार्षिकस्य दर्शितत्वात्। न व्रतसमुच्चितत्यागापनेय-पापविषयत्वम्। तेन यदेत**दङ्गिरसोक्तम्**—

"महापातक-संयुक्ता वर्षैः शुध्यन्ति ते त्रिभिः॥" इति।

एतद्वचनविषयत्वमेवात्रेति। यदि त्वज्ञानतोऽपहृत्य सुवर्णं पश्चादुत्पन्नज्ञानः समर्पयति तदा वार्षिकमेव प्रायश्चित्तम्। तेन यदेत **दापस्तम्बे**नोक्तम्—

"स्तेयं कृत्वा सुरां पीत्वा कृच्छ्रं संवत्सरं चरेत्॥"

इत्येतद्वचन-विषयत्वमेवात्रेति। न्यून-सुवर्णहरणे तु **षट्त्रिंशन्मतम्**—

"सुवर्णात् स्वल्पहरणे वत्सरः परिकीर्त्तितः।
ऊर्द्धं प्राणान्तिकं ज्ञेयं यद्वा ब्रह्महनो व्रतम्॥" इति॥

---

* स्तेयं सम्भवति। ख।
† ज्ञानेऽपि। ख।
‡ नत्वज्ञानतः। क।
§ समर्पणेऽपि त्यागेऽपि वा। ख।
** संवर्त्तः। ख।

ज्ञानतः प्राणान्तिकं अज्ञानतो ब्रह्महनो व्रतं द्वादशवार्षिकमित्यर्थः। तेनात्र न्यून-सुवर्णस्य पञ्चदश-मासस्य हरणे वार्षिक-प्रायश्चित्तोपदेशाद् भागहारतः प्रतिमासं चतुर्व्विंशति-दिन-व्रतेन प्राजापत्यद्वयं वर्द्धते।

न चैवं सति

"अपहृत्य सुवर्णस्य माषमात्रं द्विजातयः।
गोमूत्र-यावकाहारो मासः शुध्यन्ति ते त्रिभिः॥"

इत्यनेन विरोध इति वाच्यम्, प्रत्यहं यावकाहारस्य मासत्रयाचरणेऽपि उपवास-बहुल-प्राजापत्य-द्वयेन तुल्यत्वात्। तेन यथायथा माषका वर्द्धन्ते तथा-तथा पञ्चदशमाषकपर्य्यन्तं प्राजापत्यद्वयवृद्धा वार्षिकमेव व्रतं भवति। एतच्च प्रायश्चित्ताल्पत्वादज्ञानतो द्रष्टव्यम्। ज्ञानतस्तु द्वैगुण्यमिति। षोड़शमाषका-पहरणे तु सान्तपनम्। तथा च **षट्त्रिंशन्मतम्**—

"सुवर्ण-कृष्णलिकामेकामपहृत्य द्विजातयः।
कुर्य्युः सान्तपनं कृच्छ्रं तत् पापस्यापनुत्तये॥"

कृष्णलद्वयापहरणे तु सान्तपनद्वयमित्यूहनीयम्। सान्तपनञ्चात्र यदि सान्तपनं ग्राह्यम्। तथा च **शङ्खः**—

"एतदेव त्र्यहाभ्यस्तं यदि सान्तपनं स्मृतम्॥"

अस्यार्थः—सान्तपनद्रव्यैरेव कुशोदक-गो-क्षीर-दधि-मूत्र-गोमयै स्त्र्यहाभ्यस्तै रुपवास-सहितै यदि सान्तपनं भवति एतच्चतुरहः साध्यम्।

क्षत्रियादिसुवर्णापहरणस्य तूपपातकत्वात् ज्ञानतोऽपि त्रैवार्षिकमेव। तेन यदेत **दापस्तम्बेनोक्तम्**—

स्तेयं कृत्वा सुरां पीत्वा गुरुदारान् वा गत्वा चतुर्थकालमितभोजनोऽपोऽ-भ्युपेयात्। त्रिसवनस्नानाशनाभ्यां विहरन् त्रिभि र्व्वर्षैः पापं दहतीति॥"

एतद्वचन-विषयत्वमेवास्येति। सर्व्वत्रैवाज्ञानतोऽर्द्धम्। ज्ञानतोऽपहृत्य समर्पणे चतुर्थभागः। अज्ञानतोऽपहृत्य समर्पणे द्वादशभागः। तथा बालवृद्ध-रोगि-स्त्रीणां पूर्व्वोक्त-व्यवस्थयैव प्रायश्चित्तार्द्धम्। पञ्चवर्षादूर्द्ध्वमेकादशवर्षपर्य्यन्तं पादमात्रम्। पञ्चवर्ष-पर्य्यन्तं प्रायश्चित्ताभाव इति।

अथेतरद्रव्यस्तेय-प्रायश्चित्तं निरूप्यते। तत्र **मनुः**—(११।१६८)

मणि-मुक्ता-प्रवालानां ताम्रस्य रजतस्य च।
अयः-कांस्योपलानाञ्च द्वादशाहं कणान्नता॥

मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्य च।
वापीकूपजलानान्तु शुद्धिश्चान्द्रायणं स्मृतम्॥" (११।१६४)

अत्र वापी-कूप-जलापहारस्य स्वल्पत्वेन मनुष्यादिहरणेन सहातुल्यत्वात् सेतुं भित्वा स्वक्षेत्रादिप्लावनार्थं सकलजलापहरणे सति द्रष्टव्यम्।

"भक्ष्यभोज्यापहरणे यानशय्यासनस्य च।
पुष्पमूल-फलानाञ्च पञ्चगव्यं विशोधनम्॥ (११।१६६)
तृण-काष्ठ-द्रुमाणाञ्च शुष्कान्नस्य गुड़स्य च।
तैल-चर्म्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम्॥* (११।१६७)
कार्पासकीटजोर्णानां द्विखुरैकखुरस्य च।
पक्षिगन्धौषधीनाञ्च रज्वाश्चैव त्र्यहं पयः॥
एतै र्व्रतैरपोहेत पापं स्तेयकृतं द्विजः॥" (११।१६८)

अत्र द्विजशब्दप्रयोगात् सर्व्वमिदं प्रायश्चित्तं ब्राह्मण-क्षत्रिय-वैश्य-साधारणम्।

"विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्।
वैश्येऽर्द्धं पाद-शेषन्तु शूद्रजातिषु शस्यते॥"

इति साधारण-विष्णु-वचनात् शूद्रस्य † चतुर्थ-भागः प्रायश्चित्तम्।

अनुक्तानान्तु पित्तलसीसकादीनामपहरणे ‡ सान्तपनमेव प्रायश्चित्तम्।

तथा च **मनुः**—(११।१६५)

"द्रव्याणामल्पसारानां स्तेयं कृत्वान्यवेश्मतः।
चरेत् सान्तपनं कृच्छ्रं तन्निःसार्य्यात्मशुद्धये §॥" इति।

अत्रापि द्व्यहःसाध्यं सान्तपनं द्रष्टव्यम्। मणिमुक्तादिभ्यः पित्तलादीनामल्पत्वात्। द्व्यहःसाध्यञ्च सान्तपनं **याज्ञवल्क्येनोक्तम्**—

"कुशोदकञ्च गोक्षीरं दधि-मूत्र-शकृद्-घृतम्।
प्राश्यापरेद्यु रुपवसेत् कृच्छ्रं सान्तपनं स्मृतम्॥ इति"

अत्र च "तन्निस्सार्य्यात्म-शुद्धये" इत्यनेन प्रायश्चित्तं विद्यमानस्य द्रव्यस्य परित्यागे सति द्रष्टव्यम्। एतच्चोपलक्षणमात्रम्। किन्तु सर्व्वमेव सुवर्ण-हरणादि-स्तेय-प्रायश्चित्तं विद्यमानस्यापहृत-द्रव्यस्य त्यागपुरःसरमेव कर्त्तव्यम्। इतरथा कृतप्रायश्चित्तस्यापि पुन स्तद्द्रव्य-स्वीकारे तथैव स्तेयप्रसङ्गात्। विनष्टे तु द्रव्ये पुनःस्वीकाराभावात् प्रायश्चित्तमेवेति।

---

* वेणुचर्म्माभिषाणाञ्च। ख। चैलचर्म्मामिषाणाञ्च। मूलसंहितायां पाठः।

† शूद्रे। क।  ‡ मपहारे। क।

§ तन्निर्य्यात्यात्मशुद्धये मूलसंहितायां टीकाकृतां सम्मत: पाठः।

यत्तु **मनुनोक्तम्**—( ११।१६२ )

"धान्यान्नधन-चौर्य्याणि कृत्वा कामाद् द्विजोत्तमः।
सजातीयगृहादेव कृच्छ्राब्देन विशुध्यति॥"

तत् सवनस्थ-गृहस्थ-यागार्थोपनीत-धान्यापहरणे पुरोडाशादिरूपान्नापहारे यागीय-दक्षिणार्थोपनीतधनापहारे च सति द्रष्टव्यम्।

अन्यथा मनुष्य-स्त्री-क्षेत्रापहारे यत्र चान्द्रायणमुपदिष्टं तत्रान्नमात्रापहारे वार्षिकप्रायश्चित्तोपदेशादसमञ्जसमेवोपपद्यते*।

यदपि **याज्ञवल्क्येनोक्तम्**—( ३।२५८ )

"अश्व-रत्न-मनुष्य-स्त्री-भू-धेनुहरणस्य च।
निक्षेपस्य च सर्व्वस्य † सुवर्णस्तेय-सम्मितम्॥"

तथा यदपि **मनुनोक्तम्**—

"निक्षेपस्यापहरणं नराश्व-रजतस्य च।
भूमीवज्रमणीनाञ्च रुक्मस्तेय-समं विदुः॥" इति॥

न तत् प्रायश्चित्तप्रदर्शनार्थम्। नराश्वरजताद्यपहारे प्रायश्चित्तविशेषस्य तेनैवोक्तत्वात्। किन्तु निन्दार्थवादोऽयम्। अन्यथा

"अनृतञ्च समुत्कर्षे राजगामि च पैशुनम्।
गुरोश्चालीक-निर्व्वन्धः समानि ब्रह्महत्यया॥ ( ११।५६ )
ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः।
गर्हितानाद्ययोर्जग्धिः सुरापान-समानि षट्॥ ( ११।५७ )

एतेषामपि मिथ्यासमुत्कर्षाभिधानादीनां ब्रह्महत्या-प्रायश्चित्त-प्रसङ्गात् वेदविस्मरणादीनां सुरापान-प्रायश्चित्त-प्रसङ्गात् अथ तेषां निन्दार्थवादकत्वं न प्रायश्चित्तोपदेशकत्वं, तर्हि तत् समभिव्याहृतानामेव निक्षेपहरणादीनां सुवर्णस्तेयप्रायश्चित्तोप-देशकत्वमिति हास्यास्पदमेवेति। तेन निन्दार्थवादेन पापाधिक्यदर्शनात् यदेव प्रायश्चित्तमुक्तं तदेव द्विगुणं द्रष्टव्यम्। एतच्च ब्राह्मण-सम्बन्धि द्रव्यापहार-विषयम्। क्षत्रियादि-द्रव्यापहारे तु पादपाद-हानि र्द्रष्टव्येति।

अत्रापि स्त्रीबालवृद्धरोगिणां पूर्व्वोक्तव्यवस्थयैव प्रायश्चित्तार्द्धम्। पञ्च-वर्षादुपरि एकादशवर्ष-पर्य्यन्तं पादमात्रम्। पञ्चवर्ष-पर्य्यन्तं प्रायश्चित्ताभावः।

---

* वार्षिकप्रायश्चित्तोपदेशोऽसमञ्जस एवोपपद्यते। ख।

† सर्व्वं हि इति मिताक्षरायां पाठः। एतत् सर्व्वं सुवर्णस्तेय-समं वेदितव्यमिति व्याख्यानञ्च।

अथेदानीं रहस्यकृत-सुवर्णस्तेय-प्रायश्चित्तं निरूप्यते। तत्र कामतो रहःकृत-सुवर्णस्तेय-प्रायश्चित्त-विशेषानुपदेशात् प्राणान्तिकमेव।

अकामतस्तु रहस्यकृत-सुवर्णस्तेये सकल-महापातक-साधारणं

यन्मनुनोक्तम्—(११।२५८)

"महापातक-संयुक्तोऽनुच्छेदगाः समाहितः।
अभ्यस्याब्दं पावमानी र्भैक्षाहारो विशुध्यति॥

तदेवात्र द्रष्टव्यम्। यदपरं मनुनोक्तम्—(११।२५९)

"अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम्।
मुच्यते पातकैः सर्व्वैः पराकैः शोधित स्त्रिभिः॥ इति॥

तत् कामतो गृहीत्वा पश्चात् सञ्जात-बाधकतया समर्पणे सति द्रष्टव्यम्।

यत्तु याज्ञवल्क्येनोक्तम्—(३।३०३)

"त्रिरात्रोपोषितो भूत्वा कुष्माण्डीभि र्घृतं शुचिः।
सुरापः स्वर्णहारी च रुद्रं जप्त्वा जले स्थितः *॥"

तदकामतो गृहीत्वा समर्पणे सति द्रष्टव्यम्।

यदपरं मनुनोक्तम्—(११।२५१)

"सकृज्-जप्वास्य वामीयं शिवसङ्कल्पमेव च।
अपहृत्य सुवर्णन्तु तत्क्षणादेव निर्म्मलः॥ इति॥

तत्क्षत्रियादि-सुवर्णापहार-विषयम्। "अस्य वामीयस्य पलितस्य होतु" रित्यादि अस्य वामीयम्। "यज्जाग्रतो दूरमुदैतीत्यादि"—(शुक्लयजुर्व्वेद-संहिता, ३४ अ। १।) शिवसङ्कल्पः।† सुवर्णेतर-द्रव्यापहारे ‡ अस्य प्रायश्चित्तं लघुगुरुपापभेदेन प्राणायाम-शतादिकमेव ऊहनीयमिति।

तथा च मनुः—

"प्राणायामशतं कार्य्यं सर्व्व-पापापनुत्तये।
उपपातकजातानामनादिष्टस्य चैव हि॥"

---

* त्र्यहं जप्यात् जले स्थितः। ख। ब्राह्मणस्वर्णहारीच रुद्रजापी जले स्थितः।" इति मिताक्षरा-सम्मतः पाठः।

† अस्य वाम-शब्दोऽस्मिन् सूक्ते ह्स्तीति मतौच्छः सूक्तनाम्नो रिति।

‡ सुवर्णेतर-द्रव्यापहारस्य प्रायश्चित्ते। ख। सुवर्णेतरद्रव्यापहारस्य प्रायश्चित्तमिति समीचीनः पाठः प्रतिभाति।

अनादिष्टस्य अनुक्त-प्रायश्चित्तस्येत्यर्थः। इति रहस्यकृत-सुवर्णादिस्तेय-प्रायश्चित्तम्। इति बालवलभीभुजङ्गापर-नाम-भट्ट-श्रीभवदेवस्य कृतौ प्रायश्चित्त-प्रकरणे स्तेय-परिच्छेदः समाप्तः।

इदानीमगम्यागमन-प्रायश्चित्ते निरूपणीये महापातकत्वेन गुरुत्वात् प्रथमं तावद् गुर्व्वङ्गनागमन-प्रायश्चित्तमेव निरूप्यते।

तत्रानिरूपिते गुर्व्वङ्गनाशब्दार्थे गुर्व्वङ्गनागमन-प्रायश्चित्तानिरूपणात् प्रथमं गुर्व्वङ्गनाशब्दार्थ एव निरूप्यते। केयं गुर्व्वङ्गना नामेति? तत्र माता-पित्रोरिव लोकशास्त्रयो र्गुरुशब्दप्रयोगात् मातापित्रोरेवायं शरीरोत्पादकत्वो-पाधिना गुरुशब्दो मुख्यः। आचार्य्यादिषु तथाविधैकरूपानुगमाभावात् * गौण एवायमिति। अङ्गना-शब्दश्च स्त्रीमात्र-वचनः। तेन गुर्व्वी चासावङ्गना चेति † कर्म्मधारय-समासात् स्व-मातृ-वचन एवायं गुर्व्वङ्गनाशब्दः। ननु गुरोरङ्गना गुर्व्वङ्गना इति षष्ठीसमासात् सपत्नी-मातृ-‡वचनोऽपि। तथा सति सपत्नी-मातरि गुरुतल्पातिदेशश्रवणात् षष्ठ्यर्थ-लक्षणाप्रसङ्गात्। तेन § "निषादस्थपतिं याजये" दिति वत् कर्म्मधारयसमासे (A) स्व-मातृ-वचन एवायं गुर्व्वङ्गनाशब्दः। अतो गुरुपत्नीं न गच्छेदित्यादिषु पत्नीशब्दस्य परिणीत-स्त्री-वचनत्वेन कर्म्मधारयासम्भवात् षष्ठ्यर्थलक्षणाश्रयणेऽपि न गुर्व्वङ्गनाशब्दस्य सपत्नीमातृ-विषयत्वम् (B)। किन्तु न्यायवशात् स्वमातृ-विषयत्वमेवेति। किञ्च "गुरु-तल्पाभिभाष्येन स्तप्ते स्वप्यादयोमये" इत्यत्र गुरु तल्पं यस्य स गुरुतल्पः। तल्पः कलत्रमुच्यते। तदुक्तम्——

"तल्पं कलत्रे शयने गृहभेदे च दृश्यते॥" इति॥

न च गुरुशब्दः सपत्नी मातरि प्रसिद्धः किन्तु जननप्रामेव प्रसिद्धः। तथाच सति **याज्ञवल्क्यीय** मपि सपत्नी मातरि गुरुतल्पातिदेशवचनमुपपन्नं भवति। तथा च **याज्ञवल्क्यः**—

"मातुः सपत्नीं भगिनीं आचार्य्य-तनयां तथा।
आचार्य्य-पत्नीं स्व-सुतां (C) गच्छं स्तु गुरुतल्पगः॥"

---

* तथाविधैकागतरूपाभावात्। ख।

† गुरुश्चासा वङ्गना चेति। ख।

‡ सपत्नमातृ। क।

§ बृहस्पतिसवी निषादस्थपतिं। क।

(A) समासात्। ख।

(B) वचनत्वम्।

(C) आचार्य्याणीं स्वाञ्च सुतां। ख।

यत्तु **बालकेन** परिणीतसवर्णसपत्न्यभिप्रायेणातिदेशोऽयमिति व्याख्यातं, तत्सपत्नीशब्दार्थापरिज्ञानेनैव। समानः पति र्यस्याः सा सपत्नी। न च सवर्णासवर्णयोः समानपतित्वमस्ति। तेन तत्रापि सपत्नीशब्दो गौण एव। न च मुख्ये सम्भवति गौणे संप्रत्यय इति अतिदेशोऽपि सवर्णसपत्नीविषय एव। तेन

"ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥"

इति **मनु**वचनात् (११।५५) स्वमातृ-गमनमेव महापातकमिति प्रसिद्धम्।

इदानीं प्रायश्चित्तं निरूप्यते। तत्र **मनुः**—(११।१०४)

"गुरुतल्प्योऽभिभाष्यैन * स्तप्ते स्वप्यादयोमये।
सूर्म्मीं ज्वलन्तीं स्वाश्लिष्य मृत्युना स विशुध्यति॥
स्वयं वा शिश्नवृषणा वुत्कृत्याधाय चाञ्जलौ।
नैरृतीं दिशमातिष्ठेदानिपातादजिह्मगः॥" (११।१०५)

तथा च **वशिष्ठः**—

"निष्कालको घृताभ्यक्तः तप्तां सूर्म्मीं परिष्वजेत्। मरणात् पूतो भवतीति विज्ञायते॥"

निष्कालको मुण्डित-लोमकेश इति एतच्च मरणान्तिकं प्रायश्चित्तं कामतो गुर्व्वङ्गनागमने सति द्रष्टव्यम्। अकामतस्तु द्वादशवार्षिकमेव।

तथा च **शङ्खः**—

"अधःशायी जटाधारी पर्ण-मूल-फलाशनः।
एककालं समश्नानो वर्षे तु द्वादशे गते॥
रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः।
व्रतेनैतेन शुध्यन्ति महापातकिन स्त्विमे॥" इति॥

न चैतत् सपत्नी-मातृगमन-विषयम्। तद्गमनस्यातिपातकत्वेन महापातकत्वाभावात्। अतो **बालकेन** यदुक्तं तद्धेयमेव। यदपि **बालकेन** लिखितं—

"पितृ-पत्नीन्तु विज्ञाय सवर्णां योऽधिगच्छति।
जननीं वाप्यविज्ञाय नामृतः शुद्धिमाप्नुयात्॥" इति॥

---

* गुरुतल्पाभिभाष्यैन इति मेधातिथिसम्मतः पाठः। तस्य व्याख्या च गुरुतल्पगी गुरुतल्पीति वा पाठः। तल्पीति मत्वर्थीयेन विशिष्ट एव स्त्रीपुंसयोः संसर्ग उच्यते। गुरुतल्पी गुरुतल्पग इति सर्व्वज्ञनारायणः।

तदपि सर्व्वसंहितास्वदृष्टत्वाद् विश्वरूप-धारेश्वर-श्रीकरादिभि-रलिखितत्वाद्धेयमेव । भवतु तावद्वचनम् । तथापि

"रुक्मस्तेयी सुरापश्च ब्रह्महा गुरुतल्पगः ।
व्रतेनैतेन शुध्यन्ति महापातकिनस्त्विमे ॥" इति

शङ्खादिभिरज्ञानकृत-सकल-महापातक-गोचरत्वेनैव द्वादश-वार्षिक-स्योक्तत्वादीदृशी योजना कर्त्तव्या । पितृभार्य्यां सवर्णां जननीं वापि विज्ञाय योऽभिगच्छति सोऽविज्ञाय मृतः न शुध्यति ज्ञात्वैव मृतः शुध्यतीति । ज्ञानञ्च यथाविहित-मरणकारण-ज्ञानमपेक्षितम् । तेनैतदुक्तं भवति,—

ज्ञानतः सवर्णां सपत्नी-मातरमभिगम्याग्नि-प्रवेशान्मृतः शुध्यति । ज्ञानतः स्वमातरमभिगम्य ज्वलत्सूर्म्मी-समालिङ्गनादिभिर्म्मृतः शुध्यतीति ।

यत्त्वापस्तम्बेनोक्तम्—

"स्तेयं कृत्वा सुरां पीत्वा गुरुदारान् वा गत्वा चतुर्थकालाहार * स्त्रिभि-र्वर्षैः पापं नुदतीति ॥" अनेन पञ्चत्रिंशदधिक-शतधेनवो भवन्ति । तज्ज्ञान-तो रेतःसेकात् पूर्व्वं द्रष्टव्यम् । अज्ञानतस्तदर्द्धम् ।

यत्तु याज्ञवल्क्येनोक्तम्—( ३।२६० )

"प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः ।" अत्र समा इति बहुवचनेन त्रैवार्षिकमुक्तम् । तथा चाङ्गिरसोक्तम्—

"महापातकसंयुक्ता वर्षैः शुध्यन्ति ते त्रिभिरिति ॥" तत् सकृद्व्यभिचरित-गुर्व्वङ्गना-गमन-विषयम् ज्ञानतो रेतःसेकात् पूर्व्वं द्रष्टव्यम् । अज्ञानत स्तदर्द्धम् ।

यत्तु सुमन्तुना वार्षिकमुक्तम्—

"गुरुदाराभिगामी संवत्सरं ब्रह्मचारी कण्टकिनीं शाखां परिष्वज्याधः-शायी त्रिषवनी भैक्षाहारः पूतो भवतीति ॥" तदत्यन्त-बहुपुरुषव्यभिचरित-गुर्व्वङ्गना-विषयम् । ज्ञानतो रेतःसेकात् पूर्व्वं द्रष्टव्यम् । अज्ञानतस्तदर्द्धम् । तेन यदेत दापस्तम्बेनोक्तं षाण्मासिकं प्रायश्चित्तम् तदप्येतद्विषयमेव ।

तथापस्तम्बः—

"गुरुदारव्यतिक्रामी खराजिनं वहिर्लोम परिधाय गुरुदारव्यतिक्रामिणे भिक्षां देहीति सप्तागाराणि चरेत् । सा वृत्तिः षाण्मासिकी ॥" एतेनाभ्यास-

---

* चतुर्थकालाहारी । क ।

व्यभिचारिण्यां गुर्व्वङ्गनायां ज्ञानतो रेतःसेकात् पूर्व्वं द्विवार्षिकमेव। अज्ञानतस्तदर्द्धमित्याद्यूहनीयमिति। यत्तु **मनुनोक्तम्**—( ११।१०७ )

"चान्द्रायणं वा त्रीन् मासान् अभ्यसेन्नियतेन्द्रियः।
हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये॥ इति॥

तद्विशुद्धगुर्व्वङ्गनाभिलाषेण तदीयशय्याक्रमणादिजनित-पापक्षयार्थमेव द्रष्टव्यम्। एतेन सकृद्व्यभिचारिण्यां ज्ञानतो रेतः-सेकान्तसम्पूर्ण-धात्वर्थनिष्पत्तौ द्वादशवार्षिकम्। अभ्यासव्यभिचारिण्यां ज्ञानतो रेतःसेकान्तसम्पूर्ण-धात्वर्थ-निष्पत्तौ नववार्षिकम्। अत्यन्ताभ्यासवाभिचारिण्यां ज्ञानतो रेतःसेकान्त-सम्पूर्ण-धात्वर्थनिष्पत्तौ षाड्वार्षिकम्। अज्ञानतस्तदर्द्धमित्यूहनीयम्।

यत्तु **बालकेन** सवर्णव्यभिचारिण्यां गुर्व्वङ्गनायां ज्ञानतो रेतःसेकात् पूर्व्वं द्विवार्षिकमेव अज्ञानतस्तदर्द्धमित्याद्यूहनीयमिति सवर्णव्यभिचारिणीगमने प्रायश्चित्तालपत्वमभिधायासवर्ण-व्यभिचारिणीगमने किमपि नोक्तम् तदसम्बद्धमेव। तथा हि "चतुःस्वैरिण्यां वृषल्यां अवकीर्णः सचेलस्नात उदकुम्भं ब्राह्मणाय दद्यात्" इत्यादि **शंख**वचनात् व्यभिचारिण्यां प्रायश्चित्तह्रासो दृश्यते। न चात्र सवर्णासवर्ण-कृतविशेषः श्रूयते। यत्तु हीनवर्ण-व्यभिचरितस्त्रीगमने प्रायश्चित्ताधिक्यं न तद्धीनवर्ण-व्यभिचार-निबन्धनम्। किन्तर्हि हीन-वर्ण-गमने स्त्रीपतितेति पतितसंसर्ग-निबन्धनम्। न च गुर्व्वङ्गनायामपि पतितत्व-निबन्धन-प्रायश्चित्तातिरेको युज्यते। पतितत्वानुबन्धस्य गुर्व्वङ्गनागमनत्वानुबन्धादल्पत्वेन प्रायश्चित्तातिरेककारित्वासम्भवात्। अतएव प्रायश्चित्ताल्पत्वापादकत्वमपि न सम्भवति। पतितत्वानुबन्धाद् गुर्व्वङ्गनागमनानुबन्धस्य महत्वेन प्रायश्चित्ताल्पत्वापादकत्वा-योगात्। न चैवं व्यभिचारे प्रायश्चित्ताल्पत्वासम्भव इति वाच्यं, "चतुः स्वैरिण्यां वृषल्यां अवकीर्णः सचेलस्नात उदकुम्भं ब्राह्मणाय दद्यात्" इति वचनेन व्यभिचारस्य प्रायश्चित्ताल्पत्वापादकत्वदर्शनादसवर्ण-व्यभिचारे प्रायश्चित्ताल्पत्वस्यान्यत्राप्यदर्शनात्।

अतः सवर्णासवर्णव्यभिचारे गुर्व्वङ्गनायां तुल्यरूपमेव यथोक्तं प्रायश्चित्तम्। एतच्च गुर्व्वङ्गना-गमन-प्रायश्चित्तं यथापुत्रस्योक्तम् तथापुत्रव्यभिचारिताया मातुरप्यविशिष्टमेव द्रष्टव्यम्। तथा च **मनुः**—

"एवमेव विधिं कुर्य्यात् योषित्सु पतितास्वपि॥" इति॥

तथा,

विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्यादेक-वेश्मनि।
यत् पुंसः परदारेषु तच्चैनां कारयेद् व्रतम्॥" ( मनु। ११।१७७)

विप्रदुष्टामितिशब्दो न ब्राह्मण-दुष्टामाह । तथोपरिष्टाद् वक्ष्यामः । तथा च **कात्यायनः**—

"एष त्यागश्च शुद्धिश्च पतितानामुदाहृतः* ।
स्त्रीणामपि प्रसक्तानामेष एव विधिः स्मृतः ॥" इति ॥

तेन ज्ञानतो गुर्व्वङ्गना-गमने ज्वलत्सूर्म्मी-समालिङ्गनादिना मरणम् । अज्ञानतश्च द्वादशवार्षिकव्रतादिकं सकलं मातुरपि । इति गुर्व्वङ्गना-गमन-प्रायश्चित्तम् ।

इदानीं स्त्र्यन्तराभिगमनप्रायश्चित्तं निरूप्यते । तत्र **बृहद्विष्णुः**—

"मातृ-गमनं दुहितृ-गमनं स्नुषागमनमित्यतिपातकानि ।
अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।
नह्यन्या निष्कृतिस्तेषां विद्यते तु कथञ्चन ॥" इति ॥

तथा च **बृहद्धारीतः**—

"मातृ-भगिनी-दुहितृ-स्नुषा-गमन मित्यतिपातकानि
सद्योऽग्निप्रवेशोऽतिपातकिनामिति ॥"

अत्र यद्यपि निरुपपदमातृशब्दः स्वमातरमेवाभिधत्ते तथापि तस्य महापातकत्वेनातिपातकशब्दाविषयत्वाद् भगिन्यादिसमभिव्याहाराच्च सपत्नी-मातृ-विषय एवायम् । तेन सपत्नीमात्रादिगमनेऽपि ज्वलदग्नि-प्रवेश एव प्रायश्चित्तम् । तथा च **बृहद्यमः**—

रेतः सिक्त्वा कुमारीषु चाण्डालीषु स्वसुतासु च ।
सपिण्डापत्यदारेषु प्राणत्यागो विधीयते ॥"

अत्रापि स्वसुतासमभिव्याहारेणाग्निप्रवेशादेव प्राणत्यागो बोद्धव्यः । अत्र कुमारी सवर्णा उत्तमवर्णा च । सुता च सवर्णैव । सपिण्डापत्यस्यापि दाराः सवर्णा एव । तेन सपत्नीमातृदुहितृसोदरभगिनीस्नुषाणां तथा कुमारीचाण्डालीनां ज्ञानतोऽभिगमनेऽग्निप्रवेशान्मरणान्तिकमेवप्रायश्चित्तमिति स्थितम् । न चैवं सति ज्ञानतः प्राणान्तिकप्रायश्चित्ताविशेषादेषामपि महापातकत्व-प्रसङ्ग इति वाच्यं मरणरूपप्रायश्चित्तस्यैव विलक्षणत्वात् । तथा हि यथा तप्तलौहमय-शय्याशयने ज्वलत्सूर्म्मी-समालिङ्गने-स्वयं वा † शिश्न-वृषणा-

* मुपस्कृतः । ख ।
† स्वयं शिश्न । क ।

वृत्कृत्याज्ज्वलावाधायानिपातपर्य्यन्तं त्वरया गमने * अतिशयितदुःखानुभवेन चिरेण मरणं भवति न तथा ज्वलदग्निप्रवेशेनेति मरणेप्यस्ति विशेष इति अतो न महापातकगुरुतल्पगमनायास्तुल्यत्वमिति।

अतएवाज्ञानतः सपत्नीमात्रादि-गमने गुरुतल्पगमनवन्नद्वादश-वार्षिकं किन्तु चाण्डाली-गमनं विहाय नववार्षिकं, एवं चाण्डाली-गमने त्वज्ञानतो वचनबलात् त्रैवार्षिकमेव। तथा च **मनुः**—(११।१७१)

"यत् करोत्येकरात्रेण वृषली-सेवनाद् द्विजः।
तद्भैक्षभुग् जपन्नित्यं त्रिभिर्व्वर्षैर्व्यपोहति॥

अत्र वृषली चाण्डाली † न चैतदज्ञानतो रेतःसेकात् पूर्व्वमिति बोद्धव्यं, अत्र एकरात्रेणेत्यपवर्गे तृतीयेयम्। फलप्राप्तौ सत्यां क्रियापरिसमाप्तिरपवर्गः। रेतःसेकरूपफलस्यावश्यकत्वादज्ञान-विषयमिवेदं ज्ञातव्यम् ‡।

यत्तु **यमेनोक्तं** वार्षिकं तदेव ज्ञानतो रेतःसेकात् पूर्व्वं चाण्डालीगमने वक्ष्यामः। तेन सपत्नीमात्रादिगमनेष्वेवाज्ञानतो नववार्षिकस्योक्तत्वात् तत्रैव ज्ञानतो रेतःसेकात् पूर्व्वं त्रैवार्षिकम्। अज्ञानतो रेतःसेकात् पूर्व्वं सार्द्धवार्षिक-मित्याद्यूहनीयम्।

पूर्व्वं व्यभिचारि-मातृगमने यदुक्तं प्रायश्चित्तं आसमन्तादव्यभिचारिणीगमने तदर्द्धम्। एतेन महापातकशब्दं विहायातिपातकशब्दोऽप्युपपन्नो भवतीति।

क्षत्रिय-सपत्नीमातृगमने तु ब्राह्मणस्य ज्ञानतो नववार्षिकम्। वैश्य-सपत्नी-मातृगमने तु षाड्वार्षिकम्। शूद्रसपत्नीमातृगमने त्रैवार्षिकम्। अज्ञान-तोऽर्द्धमित्यूहनीयमिति।

इदानीं गुरुतल्पातिदेश-प्रायश्चित्तं निरूप्यते।

तत्र **वृहत्संवर्त्तः**—

"पितृव्यदार-गमने भ्रातृभार्य्या-गमे तथा।
गुरुतल्पव्रतं कुर्य्यान्नान्यथा निष्कृतिर्भवेत्॥"

अत्र मरणस्य व्रतशब्दानभिधेयत्वात् पितृव्यभार्य्या-गमने भ्रातृभार्य्यागमने च ज्ञानतो द्वादशवार्षिकप्रायश्चित्त-विधिरेवायमिति।

---

* दूरगमने। ख।

† वृषल्यत्र चाण्डाली प्रायश्चित्तगौरवात्। कुल्लूकः।

‡ वचनं। ख।

अज्ञानतः षाड्वार्षिकमित्यूहनीयम्। यत्र पुनर्गुरुतल्प-साम्य-प्रतिपादकानि मन्वादि-वचनानि तत्र प्रायश्चित्तमुच्यते। तत्र **मनुः**—(११।५८)

रेतःसेकः स्वयोनिषु कुमारीष्वन्त्यजासु च।
सख्युः पुत्रस्य च स्त्रीषु गुरुतल्प-समं विदुः॥"

तथा च गुरुतल्पमभिधाय **शङ्खलिखिताभ्यामुक्तम्**—

"एवं मातुलानी-पितृ-स्वसृ-स्नुषा-पितृव्यस्त्री-दुहितृ-भागिनेयीगमनेष्वाचार्य्य-दुहितृ-गमने च। तथा च **व्यासः**—

"सखि-स्वयोनि-सगोत्रा-शिष्यभार्य्या-स्नुषासु गवि चैवम्॥"

तथा **याज्ञवल्क्यः**—

"सखि-भार्य्या-कुमारीषु स्वयोनिष्वन्त्यजासु च।
सगोत्रासु सुत-स्त्रीषु गुरुतल्पसमं स्मृतम्॥
पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि।
मातुः सपत्नीं भगिनीमाचार्य्य-तनयान्तथा॥
आचार्य्य-पत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः।
छित्वा लिङ्गं वधस्तस्य सकामायाश्च योषितः *॥"

तथा च **नारदः**—

माता-मातृस्वसा-श्वश्रू र्मातुलानी पितृस्वसा।
पितृव्यसखी-शिष्यस्त्री-भगिनी तत्सखी स्नुषा॥
दुहिताचार्य्यभार्य्या च सगोत्रा शरणागता।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या॥
आसामन्यतमां गच्छन् गुरुतल्पग उच्यते।
शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते॥"

सर्व्वत्र चात्र गुरुतल्पाभिधानं न गुरुतल्प-गमन-प्रायश्चित्ततुल्य-प्रायश्चित्त-प्रतिपादनार्थं, तथा सति सगोत्राशब्देनैव सपत्नीमातृ-पितृव्यभार्य्याभ्रातृभार्य्या-पुत्रभार्य्याणां प्राप्तत्वेन पृथगभिधान-वैयर्थ्यात्। तथा सपत्नीमातुर्ज्ञात्या सह भगिन्याः तत्सख्या सह दुहितुः शरणागतया च सह साम्येन गुरुतल्पगमन-प्रायश्चित्ताभिधानानुपपत्तेः। किन्तु निन्दार्थवादोऽयं पापाधिक्य-प्रतिपादनार्थः।

* सकामायाः स्त्रिया अपि इति मिताक्षरासम्मतः पाठः। स्त्रिया स्वया इति हस्तलिखितपुस्तके तत्तक्रत्-सम्मतः पाठः।

तेन सपत्नी-मातृ-दुहितृ-भगिनीस्नुषा-कुमारी-चाण्डालीनां तथा पितृव्यभार्य्या-भ्रातृभार्य्याणां गमने यथोक्तमेव प्रायश्चित्तम्। सपत्नीमात्रादि-चाण्डालीपर्य्यन्तानां गमने अग्निप्रवेशः। पितृव्यभार्य्या-भ्रातृभार्य्या-गमने तु द्वादशवार्षिकमिति। इतरासान्तु गमने सवर्णपरदार-गमनाद् द्विगुणं प्रायश्चित्तमिति द्रष्टव्यम्। तस्मादुक्तम्—

मद्दापातक-तुल्यानि पापान्युक्तानि यानि च।
तानि पातक-संज्ञानि तदूनमुपपातकम्॥ इति॥

पातकस्योपपातकाद् गुरुत्वादतिपातकाच्च लघुत्वात् मध्यएव निवेशस्योचितत्वात् षाड्वार्षिकप्रायश्चित्त-विषयत्वम्। तेन सपत्नीभगिनीसपत्नी-भ्रातृ-भार्य्या-सपत्नी-पितृव्य-भार्य्या-भागिनेयीनां गमने सम्बन्धसन्निकर्ष-विशेषात् नववार्षिकमेव। अज्ञानतस्तदर्द्धमित्यूहनीयम्। अत्र च यद्विध-ब्राह्मणीगमने यादृशं ब्राह्मणस्य प्रायश्चित्तमुक्तम् तद्विध-क्षत्रिया-वैश्या-शूद्राणां गमने तादृशमेव ब्राह्मणस्य पादपादहीनं प्रायश्चित्तं द्रष्टव्यम्। एवं स्वपरिणीत क्षत्रियावैश्याशूद्रासु स्वोत्पादित-दुहितृ-गमने तथा स्वोत्पादित-तत्पुत्र-परिणीत-भार्य्यागमने यथाक्रमं नववार्षिक-षाड्वार्षिक-त्रैवार्षिकाद्यूहनीयानीति। अज्ञानतस्तदर्द्धमिति।

ननु मित्रभार्य्याचार्य्यादिष्वपि प्राणान्तिकमेव प्रायश्चित्तं **याज्ञवल्क्येनोक्तम्**—येनैवमाह—

"छित्वा लिङ्गं वधस्तस्य सकामाया स्त्र योषितः॥"

तथा **नारदेनापि**

"माता मातृष्वसा श्वश्रु र्मातुलानी पितृष्वसा।"

इत्यभिधायान्तेऽभिहितम्—

"शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते॥"

अतः कथमेवमादीनां गमने ज्ञानतः षाड्वार्षिकमित्युच्यते? उच्यते,—स्यादेवं यदि प्रायश्चित्तोपदेशोऽयं भवेत्।

किन्तर्हि? राजदण्डोपदेशोऽयम्। तथा छित्त्वा लिङ्गं वधस्तस्येत्युक्तम्। नतु तस्य निष्कृतिः। **नारदः** व्यक्तमेवाह—

"शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते॥" इति॥

यत्तु **यमेनोक्तम्**

"चाण्डाल-पुक्कसानान्तु भुक्त्वा गत्वा च योषितम्।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दव-द्वयम्॥"

तद्रेतःसेकात् पूर्व्वं द्रष्टव्यम् । तथा च **बृहद्यमादि**—वचनानि प्रायश्चित्तो-पदेशकानि नानाविधानि—

तत्र **बृहद्यमः**—

"चाण्डालीं पुक्कशीं म्लेच्छीं स्नुषाञ्च भगिनीं सखीम् ।
मातुः पितुः स्वसारञ्च निःक्षिप्तां शरणागताम् ॥
मातुलानीं स्वसारञ्च सगोत्रामप्यनिच्छतीम् ।
शिष्यभार्य्यां गुरोर्भार्य्यां गत्वा चान्द्रायणञ्चरेत् ॥"

तथा च **मनुः**—

"पितृस्वस्रेयीं भगिनीं स्वस्रेयीं मातुरेव च ।
मातुश्च भ्रातुराप्ताञ्च गत्वा चान्द्रायणञ्चरेत् ॥"

तथा च **बृहद्विष्णुः**—

"आचार्य्याणीन्तु यो गच्छेत् सकृन्मोहादकामतः ।
पितुः स्वसुश्च गमने द्विजश्चान्द्रायणञ्चरेत् ॥"

तथा च **बृहत्संवर्त्तः**—

"गुरो दुंहितरं गत्वा स्वसारं मातुरेव च ।
तस्या दुहितरञ्चैव चरेच्चान्द्रायणं व्रतम् ॥"
मातुलानीं तथा श्वश्रूं सुतां वैमातुलस्य च ।
मातुः स्वसारं सनाभिं पराकेनैव शुध्यति ॥"

तथा च **बृहद्वशिष्ठः**—

"आचार्य्याणीन्तु यो गच्छेत् सकृन्मोहादकामतः ।
पितुः स्वसुश्च गमने द्विजश्चान्द्रायणं चरेत् ॥"

**बृहन्मनुः**—

"मातुर्भ्रातुश्च गमने स्वसुश्च गमने तथा ।
एतास्वकामतो गत्वा द्विजश्चान्द्रायणञ्चरेत् ॥
गच्छन् वैमातुलसुतां मातृ-गोत्रां तथैव च ।
समान-प्रवरां वापि द्विजश्चान्द्रायणं चरेत् ॥'

तथा च **स्वल्पशातातपः**—

"मातुलानीन्तु यो गच्छेत्श्वश्रूं श्यालीञ्च मानवः ।
मातुलस्य सुतां गत्वा चरेच्चान्द्रायणं व्रतम् ॥"

तथाच **बृहद्यमः**:—

मातुलानीन्तु योगच्छेत् स्नुषां गच्छेच्च मानवः।
पितृ स्वसु श्च गमने द्विज श्चान्द्रायण ञ्चरेत्॥ इति॥

तथा **षट्‌त्रिंशन्मतम्**

"पितृ-मातृ-स्वसृ-स्नुषा-भगिनी-भागिनेयी-गो-चाण्डाली-गमने तप्तकृच्छ्रत्रयं सान्तपनम्॥"

तथाच **संवर्त्तः**:—

असतीं मातुराप्ताञ्च * स्वसारं ञ्चान्यमातृजाम्।
एता द्विजः स्त्रियो गत्वा तप्तकृच्छ्रं समाचरेत्॥"

**तथाङ्गिराः**:—

"पतितान्त्य-स्त्रियो गत्वा-भुक्त्वाच प्रतिगृह्यच। †।
मासोपवासं कुर्व्वीत चान्द्रायण मथापिवा॥"

तथा **बृहत्‌संवर्त्तः**:—

चण्डालीं पुक्कशीं म्लेच्छीं श्वपाकीं पतिता न्तथा।
एता स्तु ब्राह्मणो गत्वा चरेच्चान्द्रायणं व्रतम्॥"

तथाच **शातातपः**:—

"सुतां पुत्रस्य यो गच्छेत् सगोत्रा ञ्च तथैवच।
समानोगोत्रजां वापि द्विजश्चान्द्रायणं चरेत्॥ इति॥

सगोत्राशब्देन सप्तमपुरुषपर्य्यन्तं सपिण्डस्त्री अभिमता। समानगोत्रजा-शब्देन सप्तमपुरुषादुपरि जाता स्त्री अभिमता।

तदेतानि लघु-लघुतर-लघुतम-प्रायश्चित्तानि क्वचिदकामतः क्वचिद्‌व्यभि-चारिणीषु क्वचिदत्यन्तव्यभिचारिणीषु रेतः सेकात् पूर्व्वं सम्बन्धसन्निकर्षविप्रकर्षा-दिवशेन व्यवस्थापनीयानि।

इदानी मस्वजनपरदार-गमन-प्रायश्चित्तं निरूप्यते।

तत्र **शङ्खः**:—

"वैश्यायामवकीर्णः संवत्सरं ब्रह्मचर्य्यं त्रिसवनञ्चानुतिष्ठेत्।
क्षत्रियायां द्वेवर्षे त्रीणि ब्राह्मण्याम्। वैश्यावत् शूद्रायाम्॥"

---

* असतीं मातुलेयीञ्च। ख।

† पतिताश्च स्त्रीयं गत्वा भुक्त्वा संप्रतिगृह्यच। ख।

एतच्च ब्राह्मणस्य ज्ञानतो गुणवद्-ब्राह्मण्यादि-गमने सति द्रष्टव्यम्।

शूद्रायान्तु वैश्यातुल्यत्वासम्भवाद् ब्राह्मणपरिणीतगुणवत्-शूद्रागमने वार्षिकं प्रायश्चित्तं द्रष्टव्यम्। अर्थात् शूद्रपरिणीत-गुणवत्शूद्रागमने षाण्मासिकमिति। हीन-हीनतर-ब्राह्मणी-गमनेतु द्विवार्षिकं वार्षिकं च।

एवं चत्रिय-वैश्य-शूद्राणामपि हीन-हीनतराणां यथाक्रमं हानि रूहणीया। चतुःस्वैरिण्यादि-हीनतम-ब्राह्मण्यादि-गमने अतिशयेन प्रायश्चित्तह्रास-दर्शनात् चत्रियस्यतु चत्रिया-गमने पाद-हीनं द्विवार्षिकम्। चत्रियस्य वैश्यागमने पादहीनं वार्षिकम्। चत्रियस्य ब्राह्मण-परिणीत-शूद्रागमने पादहीनं वार्षिकम्। शूद्र-परिणीत-शूद्रा-गमने पादहीनं षाण्मासिकम्।

एवं वैश्यस्य वैश्यागमने द्विपादहीनं वार्षिकम्। ब्राह्मण-परिणीत-शूद्रागमने द्विपादहीनं वार्षिकम्। शूद्रपरिणीत-शूद्रागमने द्विपादहीनं षाण्मासिकम्।

तथा शूद्रस्य ब्राह्मणपरिणीत-शूद्रागमने त्रिपाद-हीनं वार्षिकम्। शूद्र-परिणीत-शूद्रागमने त्रिपाद-हीनं षाण्मासिकम्।

अज्ञानत स्तदर्द्धम्।

यदितु ब्राह्मणी चत्रिया वैश्या शूद्रा वा सकृत् सवर्णोत्तमवर्णेन वा व्यभिचरिता भवति, तदा सवर्णस्योत्तमवर्णस्य च तदुपगमने यत् त्रैवार्षिकादि-व्रत मुक्तं तस्यपाद-हानिः। अभ्यासेन सवर्णव्यभिचरितोपगमेन पादद्वय-हानिः। अत्यन्ताभ्यासेन सवर्णव्यभिचरितोपगमे पाद-त्रय-हानिः। तथापस्तम्बः—

"सवर्णाया मनन्यपूर्व्वायां सकृत् सन्निपाते पादः पतति, एवमभ्यासे द्वौ पादौ, अत्यन्ताभ्यासे त्रिपादाः, चतुर्थे सर्व्वमिति॥"

अनन्य-पूर्व्वाया मिति। सवर्णादन्योऽसवर्णः तन्निषेधात् सवर्ण-पूर्व्वाया मित्यर्थः। चतुर्थे सर्व्वमिति, नत्रैवार्षिकादि-पादहानि-क्रमेण प्रायश्चित्त-ह्रासः, किन्त्वन्यदेव शङ्खाद्युक्तं प्रायश्चित्त मित्यर्थः।

तथाच शङ्खः—

"चतुः स्वैरिण्यां वृषल्या मवकीर्णः सचेल-स्नात उदकुम्भं ब्राह्मणाय दद्यात्। वैश्यायां चतुर्थकालाहारी ब्राह्मणान् भोजयेत्। चत्रियायां त्रिरात्र मुपोषितो यवाढ़कं दद्यात्। ब्राह्मण्यां त्र्यह मुपोष्य घृतपात्रं दद्यात्॥"

चतुः स्वैरिणीच पुरुषचतुष्टय-व्यभिचरिताऽभिधीयते।

एतच्च जातिमात्रोपजीविहीनतम-ब्राह्मण्यादि-गमने सकृदज्ञानतः। एत-

कृष्टोत्कृष्टतर-ब्राह्मणादि-गमने एतदेव द्विगुणं त्रिगुणम् ज्ञानतो द्वैगुण्यं द्रष्टव्यम्। तेन यदेतद् वशिष्ठेनोक्तम्—

"ब्राह्मण स्वे दप्रेच्छापूर्व्वकं ब्राह्मणदारानधिगच्छेत् निवृत्तधर्म्मकर्म्मणः कृच्छ्रोऽनिवृत्तधर्म्मकर्म्मणोऽतिकृच्छ्रइति ॥"

तदपि चतुः स्वैरिणी-विषय मेव यथायोग्यं द्रष्टव्यम्। निवृत्तधर्म्मकर्म्मा अधार्म्मिकः। अनिवृत्तधर्म्मकर्म्मा धार्म्मिकः। सर्व्वत्रचात्र सजातीयपुरुष-दूषितायाः प्रायश्चित्तं दूषकपुरुष-तुल्यमेव द्रष्टव्यम्।

तथाच मनुः—

विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्या देकवेश्मनि।
यत् पुंसः परदारेषु तच्चैनांचारयेद् व्रतम् * ॥"

नचात्र विप्रदुष्टा मिति विप्रशब्दस्य ब्राह्मणे रूढ़त्वाद् ब्राह्मण-दुष्टा मिति द्रष्टव्यम् †। सर्व्व-परदार-गमन-प्रायश्चित्तमभिधायान्ते सामान्येनैव सकल स्त्री-प्रायश्चित्तोपदेशकत्वेनास्य मनुनोक्तत्वात्।

तथाच याज्ञवल्क्येनापि सकलपारदारिक-पुरुष-प्रायश्चित्तमभिधाय तुल्यरूपमेव स्त्रीणामपि प्रायश्चित्त मुक्तम्। तथाच याज्ञवल्क्यः—

"एषएव विधिःस्त्रीणां पतिताना मुदाहृतः ॥" इति ॥

किञ्च विप्रदुष्टा मिति यदि ब्राह्मण-दुष्टाभिप्रेता, तदा सवर्ण-शूद्रादिव्यभि-चरितस्त्रीणां प्रायश्चित्त मनुक्तमेवापद्येत। न च "स्त्रीणामर्द्धं प्रदातव्य" मित्यनेनैवोक्त मितिवाच्यम्? तस्य सजातीयपुरुषापेक्षया स्त्रीणां प्रायश्चित्तार्द्धो-पदेशकत्वात्। नत्वभिगन्तृपुरुषापेक्षया। तथा सति सुवर्णहरणादि-पापान्तरे-ष्वभिगन्तृ-पुरुषान्तराभावेनैतस्य वचनस्याप्रवर्त्तकत्वेन पुरुषसमान-प्रायश्चित्त-प्रसङ्गात् ‡। अतएव बृहस्पतिना यदुक्तम्— §

"यत् पुंसः परदारेषु समानेषु विधीयते।
व्यभिचारेऽपि * भर्त्तुः स्त्री तदशेषं समापयेत् ॥"

---

* कारयेद्व्रतम्। ख।

† बोद्धव्यं। ख।

‡ तथासति सवर्णपुरुषापेक्षाया प्रायश्चित्तोपदेशकत्वात् अवान्तरेष्वभिगन्तृपुरुषाभावेन तस्य वचनस्या-प्रवृत्तत्वेन पुरुषसमान-प्रायश्चित्त-प्रसङ्गात्। ख।

§ बृहस्पतिनोक्तम्। ख।

* व्यभिचारेषु। ख।

अत्र समानेष्विति न समान जातीयत्वेन समान विषयत्वं विवक्षितं, किन्तु दुष्टत्वेन। तेन पुरुषस्यादुष्टपरदारोपगमने* स्त्रीणामपि पुरुषतुल्यमेवव्रतं, नतु स्त्रीत्वे नार्द्धहानिव्यवस्था कर्त्तव्या। तदुक्तं "तदशेषं समापयेदिति॥" तेन यद्यग्रतः सम्पूर्णदूषिता स्त्री भवति तदा तत्समागमे पुरुषप्रायश्चित्तात्यल्पत्वान्न पुरुष-तुल्य-प्रायश्चित्तेन स्त्रीणां विशुद्धिः। तथा यद्यग्रत एव पुरुषः पतितो भवति तदा पुरुषप्रायश्चित्तबहुत्वान्न तत्समागमे स्त्रीणां तुल्य-प्रायश्चित्तं, किन्तर्हि, अदुष्टत्वे स्त्रीपुरुषयोः प्रथम-समागमे यत् पुरुषस्य प्रायश्चित्तं तदेव स्त्रीणामपि। तदुक्तम्—

"यत् पुंसः परदारेषु समानेषु विधीयते।
व्यभिचारेऽपि भर्त्तुः स्त्री तदशेषं समापयेत्॥ इति॥"

अतः सर्व्वत्रैव पारदार्य्ये † प्रथमसमागमे सजातीयस्य पुरुषस्य यत् प्रायश्चित्तं तदेव तद्दूषित-स्त्रीणामपि द्रष्टव्यम्।

तथा सर्व्वत्र पारदार्य्ये सति ‡ गर्भोत्पत्तौ सत्यां स्त्रीपुरुषयोः-प्रायश्चित्त-द्वैगुण्यमिति। कामचारगर्भोत्पादकस्यापि पापोत्पत्तौ तुल्यत्वेन निर्द्देशात् §। तथाह्यापस्तम्बः—

"चाण्डालम्लेच्छ-श्वपच-कपालव्रतधारिणां A।
अकामतः स्त्रियोगत्वा पराकव्रतमाचरेत्॥
कामतस्तु प्रसूतो वा तत् समो नात्र संशयः।
स एव पुरुष स्तस्यां गर्भो भूत्वाभिजायते B॥"
पराक व्रतञ्चा ज्ञानतो रेतः सेकात् पूर्व्वं द्रष्टव्यम्।
"कामतस्तु प्रसूतोवेति" कामना-गर्भोत् पादयोस्तुल्यत्वं दर्शयति॥

कामत स्तु प्रायश्चित्त-द्वैगुण्यम्।

"विहितं यदकामानां कामात् तद्द्विगुणं स्मृतम्॥"

इति वचनात्।

तथास्त्रिया अपि गर्भोत्पादे पापातिरेक माह वशिष्ठः—

---

* तेनादुष्टपुरुषस्यादुष्टपरदारोपगमे। क।

† सर्व्वत्रपरदारेषु। ख।

‡ कामकारेण तत्गर्भोत्पादनेपि पापोत् पत्तितुल्यत्व-निर्द्देशात्। ख।

A कपालव्रतचारिणाम्। ख।

B गर्भोभूत्वेह जायते। क।

"ब्राह्मण-क्षत्रिय-विशां भार्य्याः शूद्रेण सङ्गताः।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः॥"

तेन गर्भोत्पादे स्त्रीपुरुषयोः प्रायश्चित्तद्वैगुण्यमिति। अत्रापि * ब्रह्मवध-न्यायेन सकृदभ्यासात्यन्ताभ्यासेष्वधिकाधिकपापोत्पत्तावपि तल्लेणैव प्रायश्चित्तानुष्ठानम्। अल्पपापान्तरेषु तु प्रसङ्ग एवेति।

इदानीं प्रातिलोम्य-गमन-प्रायश्चित्तं निरूप्यते।

तत्र वशिष्ठः—

"शूद्रश्चेद् ब्राह्मणीमभिगच्छेद् वीरणपत्रैर्व्वेष्टयित्वा शूद्र मग्नौ प्रासेत् ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभुक्त्वा नग्नां खर मारोप्य महापथ मनुसंप्रापयेत् † पूतो ‡ भवतीति विज्ञायते।

वैश्यश्चेद् ब्राह्मणीमधिगच्छेत् लोहित-दर्भैर्व्वेष्टयित्वा वैश्यमग्नौ प्रास्येत्, ब्राह्मण्याश्च सर्व्वं पूर्व्ववत्। गौरखरारोपणं विशेषः।

क्षत्रियश्चेद् ब्राह्मणीमभिगच्छेत् शरपत्रैर्व्वेष्टयित्वा क्षत्रियमग्नौ प्रास्येत्। ब्राह्मण्याः सर्व्वं पूर्व्वोक्तमेव। एवं वैश्यो राजन्यां गत्वा शूद्रश्च क्षत्रियां वैश्यामिति च॥"

यत्तु शंखेनोक्तम्—

"प्रातिलोमे वधः पुंसां स्त्रीणां नासादि-कर्त्तनम्॥"

न तत् प्रायश्चित्ताभिधानम् §। किन्तु राजदण्डाभिप्रायम्।

यदि प्रातिलोम्यव्यभिचारे पुरुषस्त्रियौ यथोक्तप्रायश्चित्तं न कुरुत स्तदा राज्ञा प्रकारान्तरेणापि प्रसक्तिवारणार्थं पुरुषस्य वधः कार्य्यः स्त्रीणां नासादि-कर्त्तनं कार्य्यम्। एतच्च ज्ञानतो द्रष्टव्यम्। अज्ञानतस्तु शूद्रस्य ब्राह्मणी-गमने द्वादशवार्षिकम्। इतरत्र पादपादहानि रिति द्रष्टव्यम्।

तेन शूद्रस्याज्ञानतः क्षत्रिया-गमने नववार्षिकम्। शूद्रस्याज्ञानतो वैश्या-गमने षाड्वार्षिकम्। तथाच बृहत् प्रचेताः—

"शूद्रस्य ब्राह्मणीं मोहाद् गच्छतः शुद्धिमिच्छतः।
पूर्णमेतद् व्रतं ज्ञेयं * माता यस्मा द्वि तस्य सा॥

---

* तत्रापि च। ख।

† प्राप्य प्रापयेत्। ख।

‡ पूता भवतीति। ख।

§ प्रायश्चित्ताभिप्रायम्। ख।

* व्रतं कुर्य्यात्। क।

पादहानन्यान्यवर्णासु गच्छतः सार्व्ववर्षिकम्।
प्रायश्चित्तमिदं मोहादगम्यागमने स्मृतम्॥"

एतेन वैश्यस्याज्ञानतो ब्राह्मणी गमने नववार्षिकम्। क्षत्रियस्याज्ञानतो ब्राह्मणी-गमने षाड्‌वार्षिकमेव। अत्रापि बालवृद्धरोगिणां यथोक्तैवार्द्धव्यवस्था द्रष्टव्या। स्त्रीणान्तु—

"विप्रदुष्टां स्त्रियं भर्त्ता निरुन्ध्या देकवेश्मनि।
यत् पुंसः परदारेषु तच्चैनां चारयेद् व्रतम्॥"

इति वचनात् पुरुषतुल्यमेव * प्रायश्चित्तमित्युक्तमेवेति॥

इदानी मन्त्यजस्त्रीगमन-प्रायश्चित्तं निरूपयते।

अन्त्यजाश्च रजकादय एव। यत, स्वल्पयमेन—

"रजकश्चर्म्मकारश्च नटोवरुड़ एवच।
कैवर्त्तो मेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः॥"

इत्यभिधाय प्रायश्चित्तमुक्तम्—

"भुक्ता चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्यच।
कृच्छ्राब्द माचरेज्ज्ञाना दज्ञाना दैन्दवद्वयम्॥ इति॥"

एतच्च कृच्छ्राब्दप्रायश्चित्तं ज्ञानतोब्राह्मणस्यात्यन्ताभ्यास-विषयम्। अज्ञानतोऽत्यन्ताभ्यासेऽर्द्धप्रायश्चित्त-प्राप्तौ वचनबलाच्चान्द्रायणद्वयं द्रष्टव्यम्।

यत्तु हारीतेनोक्तम्—

"कैवर्त्ती ध्वजिनीश्चैव याश्चान्त्यप्रकृतिसम्भवाः।
कामतस्तु व्रजन् विप्र एतानेव समाचरेत्॥
द्वौ मासौ भैक्ष्य माहारो द्वौ मासौ यवयावकौ।
द्वौ मासौ पञ्चगवयञ्च षण्मासां श्चरितव्रतः।
एवं शुद्धिमवाप्नोति प्रायश्चित्तानुसारतः॥"

एतदपि षाण्मासिकप्रायश्चित्तं ब्राह्मणस्यैव ज्ञानतोऽभ्यासे सति द्रष्टव्यम्।

यच्चापस्तम्वेनोक्तम्—

"म्लेच्छीं नटीं चर्म्मकर्त्रीं रजकीं वरुड़ीं तथा †।
एतासु गमनं कृत्वा चरेच्चान्द्रायणव्रतम्॥"

तदपि ब्राह्मणस्य ज्ञानतः सकृद्गमनविषयं द्रष्टव्यम्।

---

* पुरुषसमानमेव। ख। † रजकीञ्च भटीं तथा। क।

यत्तु स्वल्पसंवर्त्तेनोक्तम्—

"रजक-व्याध-शैलूष-वेणुचर्म्मोपजीविनाम्।
स्त्रियो विप्रो यदा गच्छेत् कृच्छ्रं चान्द्रायणं चरेत्॥"

तदपि ब्राह्मणस्याज्ञानतोऽत्यन्ताभ्यास-विषयम्।

अत्र कृच्छ्रं प्राजापत्यं तत् सहितं चान्द्रायणमपेक्षितम्*।

यत्तु संवर्त्तेनोक्तम्—

"शैलूषीं रजकीञ्चैव वेणुचर्म्मोपजीविनीम्।
एता गत्वा द्विजो मोहा चरे चान्द्रायणव्रतम्॥" इति॥

एतदपि ब्राह्मणस्यैवाज्ञानतः सकृद्गमनविषयं द्रष्टव्यम्।

यत् पुनः शातातपेनोक्तम्—

"कैवर्त्तीं रजकीञ्चैव वेश्याञ्चापि गतो नरः।
प्राजापत्यविधानेन कृच्छ्रेणैकेन शुध्यति†॥"

तदज्ञानतः सकृद्रेतः-सेकात् पूर्व्वं द्रष्टव्यम्।

एतेन वेश्यायाः कैवर्त्ती-समभिव्याहाराज् ज्ञानतोऽज्ञानतश्च कैवर्त्त्यादिगमने यत् सकृदभ्यासात्यन्ताभ्यासैः प्रायश्चित्तमुक्तं तदेव वेश्यागमनेऽपि द्रष्टव्यम्।

क्षत्रियादीनान्तु

"विप्रेतु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते॥"

इति वचनात् पादपादहानिर्द्रष्टव्येति।

शूद्रायास्तु—रजकाद्यन्त्यज-गमनेऽज्ञानतः प्राजापत्यत्रयं। ज्ञानत स्तदेव द्विगुणम्। तथाच शातातपः—

"म्लेच्छेनाधिगता शूद्रा अकामाच्च कथञ्चन।
कृच्छ्रत्रयं प्रकुर्व्वीत ज्ञानात्तु‡ द्विगुणं भवेत्॥ §

एतच्च वचनं यद्यपि म्लेच्छमात्रविषयम् तथापि रजकादीनां प्रायश्चित्त-विशेषाश्रवणात्

---

* मभिप्रेतम्। ख।

† कृच्छ्रेण स विशुध्यति।

‡ ज्ञानेतु। ख।

§ एतद्वचनात् परं ख पुस्तके "चर्म्मकृत्तन्तुकृच्छैव वादको वादजीवकः (?) एषां भुक्ता स्त्रियो गत्वा व्रतं पूर्व्ववदाचरेत्" इत्यधिकं दृश्यते।

"म्लेच्छीं नटीं चर्म्मकर्त्रीं रजकीञ्च भटीन्तथा।
एतासु गमनं कृत्वा चरेच्चान्द्रायणं व्रतम्॥"

इति वचनेन म्लेच्छसमभिव्याहाराद्रजकादि-गमनेऽपि शूद्राया एतदेव प्रायश्चित्तमिति। तथाचोक्त मुशनसा—

"बहूनामेकधर्म्माणा मेकस्यापि यदुच्यते।
सर्व्वेषामेव तत् कुर्य्यादेकरूपाहि ते स्मृताः॥" इति।

चाण्डालाद्यन्त्यावसायि-गमनेत् शूद्रायाः समभिव्याहारादपि प्रायश्चित्त विशेषानवगमात् यत् शूद्रस्य चाण्डालीगमने प्रायश्चित्तं तत् शूद्राया अपि चाण्डालादि-व्यभिचारे प्यूहनीयम्।

किन्तु स्त्रीत्वेनार्द्धप्रायश्चित्तमिति विशेषः। अत्रापि * बालवृद्धादिषु पूर्व्वोक्तैव व्यवस्था द्रष्टव्येति।

इदानीं रजस्वला-गमन-प्रायश्चित्तं निरूप्यते। तत्र संवर्त्तः— †

"रजस्वलान्तु योगच्छेद् गर्भिणीं पतितान्तथा।
तस्य पापविशुध्यर्थं मतिकृच्छ्रं समाचरेत्॥"

गर्भिणी चाष्टमासीयगर्भा। एतच्च प्रथमदिवसीयसवर्णरजस्वलागमन-प्रायश्चित्तम्। अतिकृच्छ्रे धेनुद्वयम् ‡। यत्तु शातातपेनोक्तम्—

"रजस्वला-गमने सप्तरात्र मिति।" तद्द्वितीय दिवसीयसवर्ण रजस्वला-गमन-विषयम्। यत्तु याज्ञवाल्क्येनोक्तम्—

"त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां शुचि र्भवेत्॥"

तत्तृतीयदिवसीयसवर्ण रजस्वला-गमन-विषयम्। एतच्च सर्व्वं विशेषा श्रवणात् ज्ञानतो द्रष्टव्यम्। अज्ञानतोऽस्यार्द्धम्।

सवर्ण रजस्वलागमनोक्ता दसवर्ण रजस्वला-गमन-प्रायश्चित्ताधिक्य मिति कृच्छ्रादिकं यथोक्त क्रमेणोहणीय मिति।

इदानीं गवादितिर्य्यग्गमन प्रायश्चित्तं निरूप्यते।

तत्र व्यासः—

"सखि-स्वयोनि-सगोत्र-शिष्यभार्य्या-स्नुषासु गविरेव मिति॥"

---

* एतेन। क।

† स्वल्पयमः। ख।

‡ अवस्थातिकृच्छ्रे धेनुद्वयम्।  § भगिनी स्नुषा समभिव्याहारासम्भवात्। ख।

एतच्च वचनं गो-गमनस्य गुरुतल्पगमनवन्महापातक-साम्य-प्रतिपादकम्। सखि-स्वयोनि-सगोत्रा-शिष्य-भार्य्याणां भगिन्यादिपदसमभिव्याहारासम्भवात् सगोत्रशब्देनैव प्राप्ते: स्नुषाशब्दानर्थक्याच्च निन्दार्थवादोऽयं सगोत्रादिगमने सवर्ण-परदार-गमन-प्रायश्चित्ताद् द्विगुण-प्रायश्चित्त-प्रदर्शनार्थमिति गुरुतल्पावसर एवोक्तम्। तेन ज्ञानपूर्व्वकमत्यन्ताभ्यासतो ब्राह्मणस्य गोगमने षाड़्वार्षिकं प्रायश्चित्तम्।

यत्तु बृहद्विष्णुनोक्तम्—

"परदार-गमने गोव्रतं गो-गमने चेति।"

तत् सकृद्गो-गमन-विषयम्। गोव्रतशब्देन गोवध-प्रायश्चित्तमुच्यते। तच्च वृषभैकादशगोदानाधिकं त्रैवार्षिकव्रतम्। यतो **गोतमेन** वैश्यवधे "वैश्यस्य त्रैवार्षिकं वृषभैकादशगागा दद्यात्" इत्युक्त्वा "गाञ्च वैश्यव" दिति गोवधे तदेवातिदिष्टम्। तच्च पूर्व्वं सवनस्थ-विप्रसम्बन्धिकपिलादिगोवध-विषयं व्याख्यातम्। तदेवात्र विषय-गौरवादतिदिष्टं वेदितव्यम्। अत्यन्ताभ्यासत: षाड़्वार्षिके सति तस्यैवोचितत्वात्। तेन ब्राह्मणस्यैव सकृद्गो-गमने वृषभै-कादश-गोदानाधिकं त्रैवार्षिकं व्रतं द्रष्टव्यमिति। अज्ञानत स्तदर्द्धमिति।

क्षत्रियादीनान्तु यथाक्रमं पादपाद-हानि र्द्रष्टव्येति।

यत्तु **संवर्त्तेनोक्तम्**—

"गोयोनि-गमनं कृत्वा कृच्छ्रं सान्तपनं चरेत्॥" इति।

तद्रेत: सेकात् पूर्व्वं द्रष्टव्यम्।

अस्पृश्य-कुक्कुरादि-गमने प्राजापत्यमेव। तथा च **संवर्त्त:**—

"पशुवेश्या-गमने च प्राजापत्येन शुध्यतीति।

पशुवेश्या पशु-स्त्री छागीमहिष्यादि:।

पशु-गमने च **मनुराह**—(११।१७४)

"अमानुषीष्वनङ्गेषु उदक्यायामयोनिषु।
रेत: सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत्॥"*

अमानुषी तिर्य्यग्योनि:। अनङ्गं भूम्यादि। उदक्या स्नानात् पूर्व्वं चतुर्थ-दिवसीया। अयोनि: पृष्ठादिदेश:।

* एतद्वचनपूर्व्वार्द्धन्तु मूलसंहितायामन्यथा दृश्यते। यथा,—
"अमानुषीषु पुरुष उदक्यायामयोनिषु॥" वचनेऽस्मिन् पाठान्तरं मेधातिथिना समुल्लिखितम्।

अत्र च सान्तपनं द्व्यहःसाध्यं द्रष्टव्यम् । जलादिविषयस्याल्पत्वात् ।

यत्तु **संवर्त्तेनोक्तम्**—

"पशुवेश्यागमनं कृत्वा कामाचारात्तु गां विना ।
अहोरात्रोषितः कुर्य्यात् प्राणायामशतं जनः ॥" इति

तद्रेतःसेकात् पूर्व्वं द्रष्टव्यम् । गवादियानारूढ़स्य तु मैथुने स्त्रीपुरुष-साधारणेमैव स्नानमात्रं प्रायश्चित्तम् । तथाह **मनुः**—( ११।१७५ )

"मैथुनन्तु समासाद्य पुंसि योषिति वा द्विजः ।
गोयानेऽप्सु दिवा चैव स-वासाः स्नानमाचरेत् ॥"

इदानीमवकीर्णि-प्रायश्चित्तं निरूप्यते । अवकीर्णी च **यमेनोक्तः**—

व्रती यः स्त्रियमभ्येति सोऽवकीर्णी निगद्यते ॥"

व्रती च ब्रह्मचार्य्येवाभिमतः । तथा च **याज्ञवल्क्यः**—( ३।२८० )

"अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ।
गर्द्दभं पशुमालभ्य नैर्ऋतं स विशुध्यति ॥"

गर्द्दभस्य काणोऽत्र ग्राह्यः । तथा च **मनुः**—( ११।११९—१२० )

"अवकीर्णी च काणेन गर्द्दभेन चतुष्पथे ।*
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ॥
हुत्वाग्नौ विधिवद्धोमान् होमान्तेच समेत्यृचा † ।
वातेन्द्रगुरुवह्नीनां जुहुयात् सर्पिषाहुतीः ॥"

तथा च **वशिष्ठः**—

ब्रह्मचारी चेत् स्त्रिय मुपेयात् अरण्ये वा चतुष्पथे
लौकिकेऽग्नौ रक्षोदैवतं गर्द्दभं पशुमालभेत,

नैर्ऋतं चरुं वा निर्व्वपेत् । स ततो जुहुयात् ओँ कामाय स्वाहा काम-कामाय स्वाहा । नैर्ऋत्ये स्वाहा रक्षोदेवताजनेभ्य स्वाहा ।

तथा च **गोतमः** ।

"गर्द्दभेनावकीर्णी निर्ऋतिश्चतुष्पथे यजेत् । तस्याजिनेन मूर्द्धानं परिधाय लोहितपात्रेण सप्तगृहान् भैक्षं चरेत् । स्वकर्म्माचक्षाणः संवत्सरेण

---

* मिताक्षरायान्तु—"अवकीर्णी तु काणेन रासभेन चतुष्पथे । इत्येवं पाठः । "काणेन गर्द्दभेन" इति कुल्लूकभट्ट सम्मतपाठः ।

† "नन्ततश्च समेत्यृचा" इति मनुसंहितायां पाठः । "समासिञ्चन्तु मारुतः" इत्येतया ऋचा मारुतेन्द्रवृहस्पत्यग्नीनां घृतेनाहुतीर्जुहुयात् ॥

शुद्ध्येदिति॥" पाकयज्ञविधानं आचार्य्य-सकलहोम-विधानम्। तेनायमर्थो भवति। अवकीर्णारण्ये चतुष्पथे निर्ऋतिदेवताकं काणगर्द्दभं पशुमालभ्य तद-भावे निर्ऋति देवताकं चरुं अपयित्वा सकलहोमविधानेन लौकिकाग्निं संस्थाप्य "देवकृतस्यैनसोऽवजनमसिस्वाहेत्यादि स्थाने "ॐ कामाय स्वाहा ॐ कामकामाय स्वाहा निर्ऋत्यै स्वाहा ओँ रक्षोदेवताजनेभ्यः स्वाहा।" अन्ते समित्यृचा वातेन्द्र-गुरुवह्नीनां प्रत्येकमाज्याहुती हुत्वा गर्द्दभ-चर्म्मणा वहिःकेशं परिधाय स्वकर्म्माच क्षाणः मृन्मयलोहितपात्रेण प्रत्यहं सप्तगृहे भिक्षामाचरन् संवत्सरेण शुध्यतीति॥

एतच्चावकीर्णि व्रतं ब्राह्मणादिस्त्रीषु यथोक्तप्रायश्चित्तं कृत्वाधिकं द्रष्टव्यम्। क्षत्रियवैश्ययो स्त्वेतदेवावकीर्णि व्रतं पादपादोनं द्रष्टव्यम्।

तेन यदङ्गिरसोक्तम्—

"अवकीर्णी * निमित्तेन ब्रह्महत्या-व्रतञ्चरेत्।
चीरवासास्तु षण्मासान् तथा मुच्येत कोल्बिषात्॥" इति।

तद्वैश्यब्रह्मचारि-विषयमेव द्रष्टव्यम्।

योषिद्व्यतिरेकेण ब्रह्मचारिणः कामतो रेतस्त्यागे सप्तरात्रमभोजनम्। "कामावकीर्णोऽस्मि कामदग्धोऽस्मी"त्याभ्यां मन्त्राभ्यां आहुतिद्वयं हुत्वा शुध्यति। तथा च गोतमः—

"रेतःस्कन्दने ऽभये ऽरोगे ऽस्वप्ने ऽग्नीन्धन-भैक्ष्याचरणानि सप्तरात्रमकृत्वा आभ्यां होमः समिधौचारिताभ्यामिति॥"

अकामतः स्वप्नादौ रेतस्त्यागे मनूक्तं प्रायश्चित्तम्। तथा च मनुः—

"स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्र मकामतः।
स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्म्मामित्यृचं जपेत्॥"

इदानीं रहस्यकृतगुर्व्वङ्गना-गमन प्रायश्चित्तं निरूप्यते।

तत्र यदेतदकामतः सकलमहापातक-साधारणं रहस्यप्रायश्चित्तं मनुनोक्तं तदेवात्रापि द्रष्टव्यम्। तथा च मनुः—

"महापातक-संयुक्तोऽनुगच्छेद्गाः समाहितः।
अभ्यस्याव्दं पावमानीं भैक्ष्याहारो विशुध्यति॥"

व्याख्यातञ्चैतद् ब्रह्मवध-परिच्छेद एव। ज्ञानतस्तु रहस्यकृत-महापातक-चतुष्टयेऽपि मरणान्तिकमित्युक्तम्।

---

* अवकीर्णि। क।

यत्तु **याज्ञवल्क्येन**ोक्तम्—(३।३०४)

"सहस्रशीर्षां जप्त्वा तु मुच्यते गुरुतल्पगः ।
गौ र्देया कर्म्मणोऽस्यान्ते पृथग्वेति पयस्विनीति ॥" ‡

तदज्ञानतो * रेतःसेकात् पूर्व्वं गुर्व्वङ्गना-गमने द्रष्टव्यम् ।

यत् पुनर्म्म**मनु**नोक्तं—(११।२५२)

"हविष्यन्तीयमभ्यस्य नतमंह इतीति च ।
जप्त्वा च पौरुषं सूक्तं मुच्यते गुरुतल्पगः ॥"

यदपरं **मनु**नोक्तम्—(११।२५८)

"अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहितां ।
मुच्यते पातकैः सर्व्वैः पराकैः शोधितस्त्रिभिरिति ॥"

तदज्ञानतोऽतिपातकरूप-सपत्नी-मातृ-दुहितृ-स्नुषागमन-विषयम् । ज्ञानतस्तु मरणान्तिकमत्रापि यथोक्तमेव । एतदेव ज्ञानतो गुरुतल्पातिदेशविषये पितृव्य-भार्य्या-भ्रातृ-भार्य्या गमने द्रष्टव्यम् ।

यत्त्वपरं **मनु**नोक्तम्—(११।१५९)

त्र्यहमुपवसेद् युक्त ‡ त्रिरह्नोऽभ्युपयन्नपः ।
मुच्यते पातकैः सर्व्वैर्ज्जप्त्वा त्रिरघमर्षणम् ॥

तत् सर्व्वं मातुलान्यादि-गमन-विषयं द्रष्टव्यम् ।

यच्चापरं **मनुनो**क्तम्—(११।२६२)

"ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ।
साम्नां वा सरहस्यानां सर्व्वपापैः प्रमुच्यते ॥" इति ।

तद् स्वजन-ब्राह्मणी-गमन-गो-गमनादिसकल-रहस्ययौन-पाप-विषयं द्रष्टव्यम् ।

इति बालवलभीभुजङ्गापरनाम्नः श्रीभवदेवभट्टस्य कृतौ प्रायश्चित्तप्रकरणेऽगम्यागमनप्रायश्चित्त-परिच्छेदः ।

इदानीं संसर्गप्रायश्चित्ते निरूपणीये महापातकत्वेन गुरुत्वात् प्रथमं महापातकि-संसर्ग-प्रायश्चित्तमेव निरूप्यते ।

---

* तज् ज्ञानतो । क ।

‡ सहस्रशीर्षाजापी तु मुच्यते गुरुतल्पगः ।
गौर्देया कर्म्मणोऽस्यान्ते पृथगेभिः पयस्विनी ॥
इति मिताक्षरासम्मतः पाठः ।

‡ त्र्यहं तूपवसेद युक्त इति मुद्रितपुस्तके पाठः ।

तत्रानिरूपितेषु संसर्ग-प्रकारेषु संसर्ग-प्रायश्चित्तानिरूपणात् प्रथमं संसर्ग-प्रकारा एव निरूप्यन्ते। के ते संसर्ग-प्रकारा इति ?

तत्र **बृहस्पतिः**—

"एकशय्यासनं पङ्क्तिर्भाण्ड-पक्वान्न-मिश्रणम्।
याजनाध्यापनं योनि स्तथा च सहभोजनम्॥
नवधा सङ्करः प्रोक्तो न कर्त्तव्योऽधमैः सह॥"

तथा **छागलेयः**—

"आलापात् गात्र-संस्पर्शान्निश्वासात् सहभोजनात्।
सहशय्यासनात् * यानात् पापं संक्रमते नृणाम्॥"

तथा च **देवल**:—

"संलापस्पर्शनिश्वास-सहशय्यासनाशनात्।
याजनाध्यापनाद् यौनात् पापं संक्रमते नृणाम्॥"

तथा च **पराशरः**—

"आसनात् शयनात् यानाद् भाषणात् सहभोजनात्।
संक्रामन्ति हि पापानि तैलविन्दुरिवाम्भसि॥" इति।

अत्र कतमस्य महापातकि-संसर्गस्य कियता कालेन महापातकित्वापादकत्वमिति चिन्तनीयम्। अत्र सद्यःपातहेतून् संसर्गानाह **देवल**:—

"याजनं योनि-सम्बन्धं स्वाध्यायं सहभोजनम्।
कृत्वा सद्यःपतन्त्येते पतितेन न संशयः॥"

याजनं महापातकिनो यागे आर्त्विज्यम्। योनि-सम्बन्धः पुरुषस्य महापातकिन्याः स्त्रियाः † समागमः। स्त्रियाश्च महापातकि-पुरुषेण समागमः। एवं परिणयनमपि योनि-सम्बन्ध एव। तथा च सावित्रीपतितानभिधाय तैः सह परिणयनसम्बन्ध-निषेधार्थं **मनु**नोक्तम्—(२।३९)

"नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित्।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद् ब्राह्मणः सहेति॥"

तेन महापातकिना परिणीता कन्यापि महापातकिनीति। महापातकिनी वा कन्या येन परिणीता सोऽपि महापातकी। तत्र चतुर्महापातकृत्पन्नापि

---

* सहशय्या सहाध्यात्। ख।

† स्त्रिया सह। ख।

कन्या येन परिणीता सोऽपि महापातकी अत्र जीकनः—महापातकुत्पन्नापि कन्या येन परिणीता सोऽपि महापातकी महापातकुत्पन्नेन वा या कन्या परिणीता सापि महापातकिनीति। स्वाध्यायश्च उपनयनकाले सावित्रीदानं तत् येन महापातकिगुरुमुखात् कृतं स महापातकी।* महापातकी वा मानवको येन गुरुणा प्रथमं पाठितः सोऽपि महापातकी।

सहभोजनं महापातकिना सहभावेनैकपात्रभोजनम्। अत्र चतुर्णामेवैषां याजन-योनिसम्बन्ध-स्वाध्याय-सहभोजनानां पृथगुपादानात् प्रत्येकमेव महापातकित्वापादकम्। येषान्तु महापातकि-संसर्गाणां संवत्सरेण महापातकित्वापादकत्वं तानाह बृहद्विष्णुः—

"संवत्सरेण पतति पतितेन सहाचरन्।
भोजनासन-शय्यादि-कुर्व्वाणः सार्व्वकालिकमिति॥"

अत्र भोजनमेकपङ्क्ति-भोजनम्। आसनं एकासनोपवेशनम्। शय्या एकशय्या-शयनम्। आदिशब्देन एकयान-गमनमभिप्रेतम्।

वाक्यान्तरे शयनादिसमभिव्याहृतस्य एकयानगमनस्यैव संवत्सरेण पातहेतुत्वस्योक्तत्वात्। तथा च मनुः—

"संवत्सरेण पतति पतितेन सहाचरन्†।
याजनाध्यापनाद् यौनात् न तु यानासनासनात्॥"

नवानेन याजनादीनामिव संवत्सरेण पातहेतुत्वं प्रतीयते। देवलादिभिरुक्तयाजनादीनां सद्यःपातहेतुत्वानुरोधेन नत्विति निषेधस्य संवत्सरस्यातिप्रसक्तिनिवारणार्थं सर्व्वैरेव याजनादिभिः सद्यः पतति यानासनादिभिस्तु संवत्सरेणेति।*। तथा च बृहस्पतिः—

"षाण्मासिके तु संसर्गे† याजनाध्यापनादिना।
एकत्रासनशय्यादिः प्रायश्चित्तार्द्धमर्हतीति॥"

अस्यार्थः—याजनाध्यापनयोरादि‡ याजनाध्यापनादिः। तेन याजनाध्या-

---

* स्वाध्यायश्चोपनयनकालीन सावित्रीपाठः। येन पातकि गुरुमुखात्कृतः स महापातकी। ख।

† समाचरन्। क।

* पूर्व्वैरेव याजनादिभिः सम्बन्धात्। तेनायमर्थो भवति। याजनादिभिः सद्यः पततीति यानासनादिभिस्तु संवत्सरेणेति। क।

† संयोगे। ख।

‡ याजनाध्यापनादादि। ख।

पनादिना षाण्मासिके संसर्गे महापातकिप्रायश्चित्तार्द्धम्। कोऽसौ याजनादि-रित्याकाङ्क्षायां § स्ववाक्ये पूर्व्वपठितान्येव निर्द्दिशति।

"एकत्रासनशय्यादि" रिति पूर्ब्बमनेन पठितम्।—

एकशय्यासनं पङ्क्ति भाण्डपक्वान्न-मिश्रणम्।
याजनाध्यापनं योनिस्तथा च सहभोजनम्॥ इति॥"

अत्र याजनाध्यापनादिनेत्येतावतैवप्राप्तौ सत्यामेकत्रासनशयरादिरिति यदुक्तं तद् याजनाध्यापनादित्वेन कृत्स्नपूर्व्वार्द्धप्राप्तौ भाण्ड-पक्वान्नमिश्रण-व्यावृत्त्यर्थम्। तेनैकशयराशयनैकासनोपवेशनैकपङ्क्ति-भोजनैः षड्भिर्म्मासैरर्द्ध-प्रायश्चित्तम्। अर्थात् संवत्सरेण सम्पूर्णप्रायश्चित्तमिति।

यदा तु—

"षाण्मासिके तु संयोगे याजनाध्यापनादिना।
एकशयरासनं पङ्क्तिः प्रायश्चित्तार्द्धमर्हतीति

पाठस्तदा सुव्यक्तमेव। तथा च बृहस्पतिः।—*

"संवत्सरेण संयोगे † योनियुक्ते विशेषतः।
पूर्व्वोक्तेन विधानेन पतितो व्रत माचरेत्॥"

"योनियुक्ते विशेषत" इति योनियुक्तशब्देन—

"याजनाध्यापनं योनिस्तथा च सहभोजनं।"

इत्यगम्यगमनस्य परामर्श इति।

तेनायमर्थः—एकशयरादिभिः संवत्सरेण पतितव्रताचरणम्। योनियुक्ते तु गणे विशेषतः सद्य एवेति। अत्र—

संवत्सरेण पतति पतितेन सहाचरन्।
भोजनासनशयरादिं कुर्व्वाणः सार्व्वकालिकम्॥" इति

बृहद्विष्णुवचनात्। तथा—

"संवत्सरेण पतति पतितेन सहाचरन्।
याजनाध्यापनाद्यौनाद् न तु यानासनादिति"—

**मनु**—वचनाच्च द्वन्द्वनिर्द्देशेन परस्परापेक्षत्वावगमान्मिलितानामिवैक-पङ्क्तिभोजनैकासनोपवेशनैकशयराशयनैकयानगमनानाञ्चतुर्णां संवत्सरेण पात-

§ रित्यपेक्षायां। क।
* बृहस्पतिनैवोक्तं। ख।
† संबन्धे। ख।

हेतुत्वम्। तथोभयत्रापि "संवत्सरेण पतति पतितेन सहाचरन्निति" महापातकिना सहालापस्पर्शनिश्वासाचरणानामपि संवत्सरेण पातहेतुत्वं प्रतीयते। न चाचरन्नित्यस्योत्तरार्द्धेन सम्बन्धः। वृहद्विष्णुवचने "भोजनासनशयनादिं कुर्व्वाणः सार्व्वकालिकम्॥" इति अनेनैव निराकाङ्क्षस्याचरन्नित्यस्यासम्बन्धात् मनुवचने च "याजनाध्यापनाद्यौनान्न तु यानासना" दित्यस्य पञ्चम्यन्तस्याचरन्नित्यसम्बन्धात्। तेन द्वयोरपि वृहद्विष्णु-मनु-वचनयो "राचर" न्निति पृथगेवाचरणमात्रस्य संवत्सरेण पातहेतुत्वं प्रतीयते। तच्च पूर्व्वोक्तालापस्पर्श-निश्वास-विषयमेव व्यवतिष्ठते।

एषाञ्च त्रयाणामपि मिलितानां क्षुद्रत्वेन संवत्सरेण पातहेतुत्वासम्भवात् एकासनादिभिः सह मिलितानां पातहेतुत्वं तेन पूर्व्वोक्ता श्चत्वारः एतच्च मिलितं त्रितयमिति सप्तानामेव समुच्चितानां संवत्सरपर्य्यन्तं निरन्तरमेवानुष्ठितानां पातहेतुत्वम्। अन्तरान्तरा व्यवधाने तु उद्धृत्य वत्सरादिकालसङ्कलना कर्त्तव्या। अन्यतरापाये च भागशः प्रायश्चित्तव्यवस्थोहनीया इति। आलापोऽन्यान्यसङ्कथनं नतु सम्भाषणमात्रम्। तस्याति क्षुद्रतरप्रायश्चित्तोपदेशात्। तथा च पराशरः—

क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथानृते।
पतितानां भाषणे च * दक्षिणं श्रवणं स्पृशेत्॥"

**सुमन्तुः**—

"असम्भाष्य-सम्भाषणे ब्राह्मणभाषणमिति॥" नन्वालापादीनां पृथगुपादानात् पृथगेव पातहेतुत्वमुक्तम्? तथा च छागलेयः—

"आलापाद्गात्रसंस्पर्शान्निश्वासात् सहभोजनात्।
सहशय्यासनाद्यानात्* पापं संक्रमते नृणामिति॥"

सत्यमनेन वचनेन पापसंक्रमणमात्र पृथगेव हेतुत्वमेषाम्। न तु पतितत्वोत्पत्तौ प्रमाणाभावात्। अतो न विरोध इति † सर्व्वेषाञ्चैषां संसर्गप्रकाराणां ज्ञानत एव हेतुत्वम्। तथा च देवलः—

"पतितेन सहोषित्वा जानन् संवत्सरं नरः।
मिश्रितस्तेन सोऽब्दान्ते स्वयञ्च पतितो भवेदिति॥"

---

* पतितानाञ्च सम्भाषे। ख।

* एकशय्यासनाध्यायात्। ख।

† न विरोधविषय इति। क।

यत्तु श्रीकरेण ‡

"संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्यौना न्न तु यानासनासनात् ॥"

इत्यत्र मनुवचने नत्वित्यन्तेन संवत्सरेण पतितत्वं याजनाध्यापनयौनेषु यानासनासनेषु च निषिध्यते । तेन वाक्यान्तरोपात्तैरेवालापस्पर्शनिश्वासैः संवत्सरेण पततीति सम्बध्यते ।

तत्र याजनादौ वचनान्तरेण सद्यःपातस्य प्रतिपादितत्वात् यानासनैः षड्भिरेव मासैः पतितत्वमुक्तम् § । तदयुक्तं—येन सकृदुच्चरितस्य निषेधस्यान्यतरसम्बन्धे नैवोपपत्तावुभयसम्बन्धस्यान्याय्यत्वात् । तथा "संवत्सरेण पततीत्य" स्ववाक्यस्थैरेव यानासनासनैः सह सम्बन्धोपपत्तौ वाक्यान्तरस्थसंलापस्पर्शनिःश्वासैः सहसम्बन्धस्यातिजघन्यत्वादिति यथोक्तैव व्याख्योपपत्तिमर्हतीति ¶ । इदानीं प्रायश्चित्तं निरूप्यते—तत्र मनुः—(११।१८१)

"यो येन पतितेनैषां संसर्गं याति मानवः ।
स तस्यैव व्रतं कुर्य्यात् तत्संसर्गविशुद्धये ॥"

अत्र व्रतोपदेशान्मरणस्य व्रतरूपत्वाभावाद् यद्यपि कामतो महापातकिनो मरणमेव प्रायश्चित्तमुद्दिष्टं, तथापि तत् संसर्गिणस्तुल्यत्वेपि व्रतरूपमेव ।

तेन कामतो ब्रह्मवधादिमहापातकचतुष्टयेपि यद्व्रतं द्वादशवार्षिकं तदेव ज्ञानतः संसर्गिणोऽपि द्रष्टव्यम् । न तु पञ्चमस्य संसर्गिणोऽपि मरणान्तिकम् । तदुक्तं स्वल्पयमेन—

"महापातककर्त्तारः चत्वारोपि विशेषतः * ।
अग्निं प्रविश्य शुध्यन्ति स्नात्वा वा महति क्रतौ ॥" इति ॥

महति क्रतौ अश्वमेधे । एतच्च क्षत्रियस्यैव ।

"यजेद्वा चाश्वमेधेन क्षत्रियो यो महीपतिः ।"

इति क्षत्रियस्यैवाश्वमेधाधिकारात् ।

---

‡ श्रीकरेणोक्तम् । ख ।
§ पतितत्वमित्युक्तम् । ख ।
¶ व्याख्योपपत्तियती । ख ।
* चत्वारो वा विशेषतः । ख ।

तेन यदेतन्मध्यमाङ्गिरसोक्तं—

"यः कामतो महापापं नरः कुर्य्यात् कथञ्चन ।
न तस्य शुद्धिर्बोद्धव्या वह्निप्रपतनादृते ॥" इति ।

तदपि ब्रह्मवधादिमहापातकविषयमेव द्रष्टव्यम् ।

यदपि छागलेयेनोक्तम्—

"यस्य येनेह संसर्गस्तस्य तद्व्रतमादिशेत् ।
ज्ञात्वा करोति संसर्गं निष्कृतिं न विधीयते ॥" इति ।

तदपि सकलपापिष्ठसंसर्गे निष्कृत्यभावोपदेशस्यायुक्तत्वान्निन्दार्थवाद एव बोद्धव्यः । तेन सद्यो वा संवत्सरेण वा संसर्गे यत्र महापातकित्वं तत्र ज्ञानतो द्वादशवार्षिकं अज्ञानतस्तदर्द्धमिति बोद्धव्यम् । अत्र

"यो येन पतितेनैषां संसर्गं याति मानवः ।"

इत्यनेन सर्व्वेषामेव महापातक्यतिपातकिपातक्युपपातकिनां साधारणपतितशब्देन ग्रहणम् ।

तेन सपत्नीमातृ*दुहितृसोदरभगिनीस्नुषासवर्णकुमारीगमनानामतिपातकत्वेन ज्ञानतो मरणान्तिकत्वेपि† अज्ञानतो नववार्षिकस्योक्तत्वात् ज्ञानतस्तत्संसर्गेपि नववार्षिकमेव । पितृव्यभार्य्या-भ्रातृभार्य्या-मातुलानी-भागिनेयी-पितृस्वस्राचार्य्यभार्य्यादिगमनानां पातकत्वेनाज्ञानतः षाड्वार्षिकस्योक्तत्वात् ज्ञानतस्तत्संसर्गेऽपि षाड्वार्षिकादिकमेव योज्यम् । एवमस्वजनब्राह्मण्यादिगमनानामुपपातकत्वेन ज्ञानतस्त्रैवार्षिकादेरुक्तत्वात् ज्ञानतस्तत्संसर्गेऽपि त्रैवार्षिकार्द्धादिकमेव योजनीयम् । तथा ज्ञानतः शूद्रव्यभिचारिताया ब्राह्मण्या ब्राह्मणी-व्यभिचरितस्य शूद्रस्य च मरणान्तिकोपदेशादज्ञानतो यद्द्वादशवार्षिकमुक्तं तदेव ज्ञानतस्तत्संसर्गेऽपि योज्यम् । तथा च बृहद्विष्णुः—

"यः पापात्मना येन सह संयुज्येत‡ स तस्यैव व्रतं कुर्य्यादिति ।"

अथ पतितप्रतिग्रह-पतितान्नभोजन-पतितस्पृष्टान्नभोजनरूपसंसर्ग-प्रायश्चित्तं निरूप्यते । तत्र यदेतत् संवर्त्तेन ब्रह्म-वधादिमहापातकचतुष्टये प्रायश्चित्तमभिधाय संसर्गप्रायश्चित्तमुक्तम्—

"एभिः संसर्गमायाति यः कश्चित् पापमोहितः ।
षण्मासानब्दमेकं वा पूर्व्वोक्तानां व्रतं चरेत् ॥" इति ।

---

* सपत्नमातृ । क ।
† मरणान्तिकेऽपि । ख ।
‡ संसृज्येत । ख ।

एतद्विषयत्वमेव तस्य। तेन ज्ञानतः षण्मासपर्य्यन्तं निरन्तरं महापातकि-प्रतिग्रहे महापातक्यन्नभोजने च पूर्व्वोक्तं द्वादशवार्षिकम्। "अब्दमेकं वे"त्यनेन तु ज्ञानतोऽब्दपर्य्यन्तं महापातकि-स्पृष्टान्नभोजने द्वादशवार्षिकमिति द्रष्टव्यम्।

एवं सत्यतिपातकि-पातक्युपपातकि-प्रतिग्रहे तदन्नभोजने च षण्मासैनैव-वार्षिक-षाड्वार्षिक-त्रैवार्षिक-प्रायश्चित्तानि।

तत् स्पृष्टान्नभोजने च संवत्सरेणेति योज्यम्। सर्व्वत्राज्ञानतस्तदर्द्धम्। तेन ज्ञानतः संवत्सरपर्य्यन्तं महापातक्यादिप्रतिग्रहान्नभक्षणसंसर्गेऽपि द्वादशवार्षि-कादिप्रायश्चित्तं योजनीयम्। संवत्सरादूर्द्ध्वन्तु—

"संवत्सरे व्यतीते तु प्रायश्चित्तं न विद्यते"—

इति वचनान्न प्रायश्चित्तातिरेकः। किन्तु संवत्सरेण यत्प्रायश्चित्तं तदेव द्रष्टव्यम्। तत्र * भागभारेण प्रात्यहिकादिप्रायश्चित्तमूहनीयमिति। किन्तु—

"पतितानाञ्च सर्व्वेषां भुक्त्वा चान्द्रायणञ्चरेत्।"

इति **छागलेय**वचनात् सकृत् महापातक्यन्नभोजने चान्द्रायणम्। तदुपरि भागहारेण प्रायश्चित्तमाकलनीयम्।

महापातकिस्पृष्टान्नभोजने तु संसर्गस्य किञ्चिद्व्यवहितत्वात् पादहानि-र्द्रष्टव्या। महापातकिपाकसङ्कीर्ण-† पाकान्नभोजने तु ततोऽपि व्यवहितत्वादर्द्ध-हानिर्द्रष्टव्या।

ननु ?

"चाण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति॥"

इति **मनु**वचनात् चाण्डालान्नभोजनप्रतिग्रहयोश्चाण्डालीगमनसमभिव्याहृतत्वेन सद्यः पातहेतुत्वं प्रतीयते। महापातकिचाण्डालयोश्च तुल्यत्वं अतः कथं महा-पातकिप्रतिग्रहान्नभोजने षड्भिर्मासैर्द्वादशवार्षिकमित्युक्तम् ? उच्यते—

न तावच्चाण्डालस्त्रीगमनवच्चाण्डालान्नभोजनस्य सद्यःपातहेतुत्वं सम्भवति। तथा हि चाण्डालान्नभोजने—

"चाण्डालान्नं यदा भुक्तं ब्राह्मणाद्यैः प्रमादतः।
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत्।
षड्रात्रञ्च त्रिरात्रञ्च वर्णयोरनुपूर्व्वशः॥"

---

* अत्र। क।

† पाकस्पृष्टान्न इति क-पुस्तके टिप्पनी।

इति चान्द्रायणाद्युपदेशात्। नाप्यत्यन्ताभ्यासे पातहेतुत्वम्। सकृद्भोजने चान्द्रायणप्राप्तावत्यन्ताभ्यासेन द्वादशवार्षिकस्यायुक्तत्वात् *। तेन चाण्डालान्न-भोजनप्रतिग्रहयोश्चाण्डालस्त्रीगमनसमभिव्याहारोऽपि निन्दार्थवाद एव।

तत्र याजन-यौन स्वाध्याय-सहभोजनानां सद्यःपातहेतुत्वस्य वचनान्तरोक्त-त्वात् पतितान्नभोजनप्रतिग्रहयोश्च इतरसंसर्गापेक्षया गुरुत्वात् षाण्मासिका-भ्यासेनैव पतिततुल्यत्वापादकत्वमित्युचितमिति।

महापातकि-श्राद्धग्रहणे तु श्राद्धस्य देवतोद्देशेन † द्रव्यत्यागात्मकत्वेन सकलसम्पूर्णलक्षणसम्भवेन यागत्वाद्याजनेन सद्यःपातहेतुत्वात् सद्य एव पतितत्वम्। प्रतिग्रहे चायं विशेषः—यत् प्रतिग्रहोपात्त-सकलद्रव्यत्यागेन प्रायश्चित्ताचरणम्।

एवमध्यापन-परिणय-याजनेष्वप्युक्तप्रायश्चित्तमध्यापनोपात्तद्रव्यत्यागेनैव द्रष्ट-व्यम् ‡। एतच्चासत्प्रतिग्रहावसरे वक्ष्यामः। अत्र च—

"ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥"

इति वचनानुसारेण ब्रह्महत्यादिमहापातकिसंसर्गेणैव § महापातकित्वम्। न तु संसर्गसंसर्गिणः। तदनुसारेणैव "संवत्सरेण पतति पतितेन सहाचरन्निति" अत्रापि प्रथमानामेव महापातक्यतिपातक्युपपातक्यनुपातकिनां ¶ पतितशब्देन ग्रहणम्। पतितत्वं तत्संसर्गिणामेव। न तु संसर्गिसंसर्गिणाम्। तेन प्राय-श्चित्तमप्येतत् प्रथमसंसर्गिणामेव।

न च संसर्गि-संसर्गिणां पापमेव नास्तीति वाच्यं तत्संसर्गनिषेधस्यैव पाप-हेतुत्वसद्भावे प्रमाणत्वात्। तथा च **मनुः**—११।८९।

"एनस्विभिरनिर्णिक्तैर्नार्थं किञ्चित् समाचरेत्।
कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचित्॥" **

---

* सकृच्चाण्डालान्नभोजने चान्द्रायणमात्रप्राप्तौ अत्यन्ताभ्यासे द्वादशवार्षिकस्यायुक्तत्वात्। ख।

† देवतोद्देश्य।

‡ अध्यापनाद्यर्ज्जितद्रव्यपरित्यागेनैव द्रष्टव्यम्। क।

§ संसर्गिण एव। ख।

¶ महापातक्यतिपातक्युपपातकिनाम्। क।

** जुगुप्सेत्र कदाचन। क।

अत्र प्रायश्चित्तकल्पनायामापस्तम्बवचनानुसारेणार्द्धार्द्धादिव्यवस्थैवोचिता *। तथा चापस्तम्बेनाज्ञानतोऽन्त्यजपक्वान्नभक्षणे शूद्रस्य प्राजापत्यमभिधाय तत्संसर्गिणामर्द्धार्द्धहानिरुक्ता। तथा चापस्तम्बः—

"भुक्तं यैस्तत्र पक्वान्नं कृच्छ्रं तेषां प्रदापयेत्।
तेषामपि च यैर्भुक्तं तेषामर्द्धं प्रदापयेत् †॥ इति।

तेनात्र प्रथमसंसर्गिणां यत् प्रायश्चित्तं तत् संसर्गिणस्तदर्द्धं तत्संसर्गिणस्तस्याप्यर्द्धमिति सर्व्वत्रैवोहनीयमिति।

यत्तु बालकादिभिः पादपादहानिरित्युक्तं तत्स्वकपोलकल्पितमिति नादरणीयम्।

अत्र च याजनाध्यापनयौनैकपात्रभोजनानां समस्तानां व्यस्तानाञ्चाभ्यासेपि न प्रायश्चित्तावृत्तिः। सकृदनुष्ठानेनैव तन्त्रेण सर्व्वपापक्षयोपपत्तेः। तथानेकमहापातकिभिः संवत्सरपर्य्यन्तमेकशय्यासनादिभिः संसर्गेऽपि तन्त्रेणैव प्रायश्चित्तानुष्ठानम्।

एवं संवत्सराधिकशतवर्षेऽपि पातकित्वाविशेषात् संवत्सर-संसर्ग-प्रायश्चित्तमेव।

अतिपातक्यादिसंसर्गे तु महापातकि-संसर्गप्रायश्चित्तेनैव प्रसङ्गेन पापक्षयः। क्षत्रियादीनान्तु—

"विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषन्तु शूद्रजातिषु शस्यते॥"

इति पादपादहानिभिर्व्यवस्था।

तथा स्त्रीवृद्धरोग्यूनषोड़शवर्षीयबालानामर्द्धं प्रायश्चित्तम्। पञ्चवर्षादूर्द्ध्वमेकादशवर्षपर्य्यन्तं पादमात्रम्। पञ्चवर्षपर्य्यन्तं प्रायश्चित्ताभाव इति द्रष्टव्यम्।

महापातकि-जातस्य तु पुरुषस्य महापातकित्वात् प्रायश्चित्तविशेषानुपदेशाच्च पितृतुल्यमेव प्रायश्चित्तम्। तेन यत्र पितुर्म्मरणान्तिकं तत्र तस्यापि मरणान्तिकमेव। यत्र पितुर्द्वादशवार्षिकादिव्रतम् तत्र तस्यापि द्वादशवार्षिकादिकमेव ‡।

---

* नार्द्धार्द्धव्यवस्थोचिता।

† विधीयते। ख।

‡ द्वादशवार्षिकादिकमेव व्रतम्। क।

महापातकि-जाता तु परित्यक्त-सकलपितृद्रव्या परिणीतव्यैव ।* तथा च **वशिष्ठः**—"पतितोत्पन्नः पतितोऽन्यत्र स्त्रियाः सा हि परगामिनी तामनृक्थामुपेयादिति ॥" **वृद्धहारीतो**ऽप्याह—

"पतितस्य तु कुमारीं विवस्त्रामाच्छाद्याहोरात्रमुपोषितां प्रातः शुक्लेन हरितेन वा वाससाच्छाद्य नाहमेतेषां ममैते इति त्रिरुच्चैरभिदधानां तीर्थेषु गृहे वा उद्वहेत् ॥" इति ॥

किन्तु यत्र पितुर्मरणान्तिकं प्रायश्चित्तं तत्र द्वादशवार्षिकं प्रायश्चित्तं कारयित्वा विवाह्या । यत्र पुनः पितुर्द्वादशवार्षिकादिकं व्रतं तत्र स्त्रीत्वादर्द्धप्रायश्चित्तं कारयित्वा विवाह्येति । इति महापातकादि-संसर्गप्रायश्चित्तम् ।

इदानीमस्पृश्य-स्पर्श-† प्रायश्चित्तं निरूप्यते । तत्र **याज्ञवल्क्यः**—

"चाण्डाल-पुक्कस-म्लेच्छ-भिल्ल-पारसिकादिकान् ।
महापातकिनश्चैव स्पृष्ट्वा स्नायात् सचेलकः ॥

तथा **छागलेयः**—

"चाण्डालं पतितं स्पृष्ट्वा सचेलो जलमाविशेत् ।
शवं तत् स्पृष्टिनश्चैव चैत्यं यूपं रजस्वलाम् ॥"

**षट्त्रिंशन्मतम्**—

"बौद्धान् पाशुपतांश्चैव लौकायतिकनास्तिकान् ।
विकर्मस्थान् द्विजान् स्पृष्ट्वा सचेलो जलमाविशेत् ॥
चैत्यवृक्षश्चितिर्यूप श्चाण्डालः सोम-विक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत् ॥"

तथा च **मनुः**—५।८७।

"नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।
आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा ॥"

मदिरास्पर्शे तु विशेषः

"जान्वधः स्नानमात्रं स्यादानाभेरेकरात्रकम् ।
नाभेरूर्द्ध्वं त्रिरात्रं स्यान्मदिरा-स्पर्शने विधिः ॥" इति ॥

व्रतस्थस्य तु ब्राह्मणस्य जान्वधः स्पर्शेऽपि उपवासः पञ्चगव्यपानञ्च । तदुक्तम्—

"मद्येन स्पृश्यते यस्तु ब्राह्मणः शंसितव्रतः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥"

---

* परिणीतव्या । ख ।

† इदानीमस्पृश्य-संसर्गं । क ।

**षट्त्रिंशन्मतम्**—

"श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः।
सचेलः सशिरःस्नातस्तदानीमेव शुध्यति॥"

चकारात् कुक्कुरतुल्यतयात्र काकोऽपि ग्राह्यः। तथा च काकस्य कुक्कुर-तुल्यतामाहापस्तम्बः—*

"गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च।
शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च॥"

कुक्कुरादिस्पर्शे † विशेषमाहाङ्गिराः—

"ऊर्द्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते।
तत्र स्नानमधस्ताच्च शुद्धिः प्रक्षालने न तु ‡॥"

तथाचाङ्गिराः—

"यस्तु छायां श्वपाकस्य ब्राह्मणोह्यतितिष्ठति।
सचेलो जलमाप्लुत्य घृतं प्राश्य विशुध्यति॥"

अत्राधितिष्ठतीति धात्वर्थपर्य्यालोचनेनाचाराच्च चाण्डालादिच्छायायां चिरावस्थाने सति स्नानं स्पर्शमात्रे तु न दोष इति। तथाचापस्तम्बः—

"सर्व्वेषामन्त्यजातीनां स्पर्शे त्वाचमनं विदुः।
येषान्तु ब्राह्मणो नास्ति तेषां स्नानं विधीयते॥"

यस्य स्पर्शे स्नानं तस्योपस्पर्शेऽपि स्नानमेव। तथाचापस्तम्बः—

"एकशाखां समारूढ़श्चाण्डालो वा रजस्वला §।
ब्राह्मणस्य समं तत्र विवासाः स्नानमाचरेत्॥"

यदि तु रात्रौ अस्पृश्यस्पर्शनं भवति तदा रात्रावेव स्नातव्यं रात्रिलङ्घनन्तु न कर्त्तव्यम्। तथा च **यमः**—

"चाण्डालैः श्वपचैः स्पृष्टे निशि स्नानं विधीयते।
न वसेत् सदनं रात्रौ सद्यः स्नानेन शुध्यति॥
अथ तत्र वसेद्रात्रावज्ञानादविचक्षणः।
तदा तु तस्य तत् पापं शतधा परिवर्द्धते॥"

---

* कुक्कुरतुल्यतायामापस्तम्बः। क।

† कुक्कुटादिस्पर्शे। ख।

‡ तत्र स्नानमधःस्याङ्गं क्षालनेनैव शुध्यति। ख।

§ चाण्डालस्य रजस्वला। ख।

स्नानाशक्तौ तु विशेषमाह—

"आतुरे स्नानमापन्ने दशकृत्वस्त्वनातुरः।
स्नात्वा स्नात्वा स्पृशेत्तञ्च ततः शुध्येत् स आतुरः॥"

अदोषविषये तु षट्त्रिंशन्मतम्—

"देवयात्रा-विवाहेषु यज्ञेषु प्रततेषु च।
उत्सवेषु च सर्व्वेषु स्पृष्टास्पृष्टि न दुष्यति॥"

तथा च बृहस्पतिः—

"तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे।
नगरग्रामदाहे च स्पृष्टास्पृष्टि न दुष्यति॥"

उच्छिष्टस्य तु चाण्डालादिस्पर्शे विशेषमाह कात्यायनः—

"चाण्डालैः पतितैः स्पृष्टो विण्मूत्रे तु कृते द्विजः।
त्रिरात्रं तत्र कुर्व्वीत भुक्तोच्छिष्टः षड़ाचरेत्॥"

इदञ्च कामतः स्पर्शविषयम्। अत्र षडुपवासैरेका धेनुः।

तेन यदेतत् सर्व्वसाधारणं हारीतेनोक्तम्—तदपि कामतो भुक्तोच्छिष्टविषयमेव। तथा च हारीतः—

"अनुच्छिष्टे तु संस्पृष्टे स्नानं येन विधीयते।
उच्छिष्टस्तेन संस्पृष्टः प्राजापत्यं समाचरेत्॥"

यत्त्वङ्गिरसोक्तम्—

"भुक्तोच्छिष्टस्त्वनाचान्तः स्पृष्टश्चाण्डालैः श्वपचेन वा।
प्रमादात् स्पर्शनं गच्छेत् तस्य कार्य्यं विशोधनम्॥
गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत्।
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति॥"

इदमकामतो भुक्तोच्छिष्टविषयम्।

यत्त्वापस्तम्बेनोक्तम्—

"चण्डालेन तु संस्पृष्टो विशेषस्तु द्विजोत्तमः।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति॥"

तदकामतोऽधोच्छिष्टविषयम् *। सर्व्वञ्चेदं रजस्वलास्पर्शे कुक्कुरादीनाञ्च नाभेरूर्द्ध्वस्पर्शे समानं द्रष्टव्यम्। नाभेरधः कुक्कुरादिस्पर्शे तु उच्छिष्टस्य स्नानमात्रमेव।

* अधमोच्छिष्टविषयम्। ख।

चाण्डालान्नस्पर्शे तु विशेषमाह हारीतः—

"उच्छिष्टस्तु स्पृशेद्विप्रश्चाण्डालान्नं कथञ्चन।
अर्द्धोच्छिष्टस्तु संस्पृष्टः द्विजः सान्तपनं चरेत्॥"

अत्र सान्तपने धेनुरेका।

"अधोच्छिष्टो यदा स स्यात् प्रायश्चित्तं भवेदिदम्।
त्रिरात्रमुपवासः स्यात् पञ्चगव्येन शुध्यति॥"

चाण्डालोदकस्पर्शे त्वङ्गिरा—

"चाण्डालोदकसंस्पर्शे स्नानमेव समाचरेत्।
उच्छिष्टस्तेन संस्पृष्टः त्रिरात्रेण विशुध्यति॥"

यदि त्वज्ञानतश्चाण्डालोदकादिकं स्पृष्ट्वा भोजनादिकं करोति तदाहापस्तम्बः—

"संसर्गन्तु यदा गच्छेच्छवोदक्यान्त्यजैः सह।
एतैरेव यदा स्पृष्टः प्रायश्चित्तं कथं भवेत्॥
भोजने तु त्रिरात्रं स्यात् पाने तु ह्यहमेव च।
मैथुने पादकृच्छ्रं स्यात् तथा मूत्रपुरीषयोः॥
दिनमेकं तथा मूत्रे पुरीषे तु दिनद्वयम्।
एकाहस्तत्र निर्दिष्टो * दन्तधावनभक्षणे॥"

एतदज्ञानतः। ज्ञानतो द्वैगुण्यम्।

ज्ञानाज्ञानयोस्त्वत्यन्ताभासतो भोजने विशेषमाहापस्तम्बः—

"चाण्डालञ्चैव संस्पृश्य यश्चाश्नीयात्तु कामतः।
द्विजश्चान्द्रायणं कुर्य्यात्प्राजापत्यमकामतः॥"

यदि तु तैलघृताभ्यक्तश्चाण्डालादिकं स्पृशति तदाहापस्तम्बः—

"येन केनचिदभ्यक्तश्चाण्डालं पतितं स्पृशेत्।
उपवासेन चैकेन पञ्चगव्येन शुध्यति॥"

चर्म्मकारादिभिः स्पर्शे त्वापस्तम्बः—

"चर्म्मकारञ्च रजकं धीवरं नटमेव च।
एतान् मोहाद्द्विजः स्पृष्ट्वा आचामेत् प्रयतोऽपि सन्॥
एतैः स्पृष्टस्तथोच्छिष्ट एकरात्रं पयः पिबेत्।
तैरुच्छिष्टैस्त्रिरात्रं स्यात् घृतं प्राश्य विशुध्यति॥"

---

* निर्द्दिष्टो। क।

सर्व्वत्रोच्छिष्टस्यानुच्छिष्टे यदुक्तं तदुभयोच्छिष्टस्पर्शे द्विगुणं द्रष्टव्यम्। सवर्णानामुच्छिष्टोच्छिष्टस्पर्शे चाचमनमात्रम्। तथा च **बृहस्पतिः**—

"उच्छिष्टोच्छिष्टसंस्पर्शः कदाचिदुपजायते ।
वर्णानान्तु सजातीनामुपस्पृश्य ततः शुचिः ॥"

इदञ्च "कदाचिदुपजायत" इति वचनादकामतः स्पर्शविषयम्। कामतस्तु स्पर्शे ब्राह्मणस्य स्नानोपदेशात्तुल्यन्यायतया सर्व्वेषामेव स्नानमिति द्रष्टव्यम्। तथा **चापस्तम्बः**—

"विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कथञ्चन ।
स्नायात्तेन विशुद्धः † स्यादापस्तम्बोऽब्रवीन्मुनिः ॥"

उच्छिष्ट-क्षत्रियवैश्यस्पर्शे ब्राह्मणस्य उच्छिष्टस्य विशेषमाहा**पस्तम्बः**—

"क्षत्रियेण यदा स्पृष्ट उच्छिष्टस्तु कथञ्चन ।
स्नानं जप्यञ्च त्रैकाल्यं दिनस्यान्ते विशुध्यति ॥
वैश्येन तु यदा स्पृष्ट उच्छिष्टस्तु कथञ्चन ।
स्नानं जप्यञ्च त्रैकाल्यं दिनस्यान्ते घृतं पिबेत् ॥"

एतेनार्थात्तूच्छिष्टस्य ब्राह्मणस्य उच्छिष्टशूद्रस्पर्शे उपवासः पञ्चगव्यपानमित्यूहनीयम्। अथोच्छिष्टस्य * ब्राह्मणस्यानुच्छिष्टब्राह्मणस्पर्शे न दोषः। क्षत्रियस्पर्शे त्वाचमनम्। वैश्यस्पर्शेऽभ्युक्षणम्। शूद्रस्पर्शे स्नानमित्यूहनीयम्। तथाहा**पस्तम्बः**—

"तैलाभ्यक्तस्त्वनाचान्तः श्मश्रुकर्म्मणि मैथुने ।
मूत्रोच्चारं यदा कुर्य्यादहोरात्रेण शुध्यति ॥"

तथा **हारीतः**—

"श्वविष्ठां काकविष्ठां वा कङ्कगृध्रनरस्य च ।
अथोच्छिष्टस्तु संस्पृश्य सचेलो जलमाविशेत् ॥
ऊर्द्ध्वोच्छिष्टस्य संस्पर्शे प्रायश्चित्तं विनिर्द्दिशेत् ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥"

**आपस्तम्बोऽप्याह**—

"भुक्तोच्छिष्टस्त्वनाचान्तो ह्यमेध्यं स्पृशते यदि † ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥"

---

† विशुद्धिः। क।
* अर्थादुच्छिष्टस्य। क।
† संस्पृशेद् यदि। ख।

इदानीं रजस्वलायाश्चाण्डालादिस्पर्शे प्रायश्चित्तं निरूप्यते। तत्र दिनभेदेन विशेषमाह **बृहस्पतिः**—

"पतितान्त्यश्वपाकेन संस्पृष्टा स्त्री रजस्वला।
प्रथमेऽह्नि त्रिरात्रन्तु द्वितीये द्व्यहमाचरेत्।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमेव च॥"

अत्र सर्व्वत्रोपवासे पञ्चगव्यपानमपि कर्त्तव्यम्। कुक्कुरादिस्पर्शे विशेषमाह **यमः**— ‡

"रजस्वला तु संस्पृष्टा श्वानजम्बुकवायसैः।
निराहारा भवेत्तावद् यावत्कालेन शुध्यति॥"

यदि तु रजस्वला उपवास-समर्था न भवति तदा अफालकृष्टैर्नीवारादिभिर्वर्त्तित्वा पञ्चगव्यं पातव्यम्।

तथा **चाङ्गिराः**—

"चण्डालः श्वपचो वापि † ह्यात्रेयीं स्त्रियं स्पृशेत्।
अफालकृष्टे वर्त्तित्वा पञ्चगव्येन शुध्यति॥"

एतेन रजस्वलायाश्चर्म्मकाररजकधीवरादिस्पर्शेऽपि * उपवासः पञ्चगव्यपानमित्यूहनीयमिति।

इदानीमन्योऽन्यरजस्वलास्पर्शे विशेषमाह **काश्यपः**—

"रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि।
एकरात्रं निराहारा पञ्चगव्येन शुध्यति॥
रजस्वला तु संस्पृष्टा राज्ञ्या च ब्राह्मणी यदि।
त्रिरात्रेण विशुद्धिः स्याद् व्याघ्रस्य वचनं यथा॥
रजस्वला तु संस्पृष्टा वैश्यया ब्राह्मणी यदि।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति॥
रजस्वला तु संस्पृष्टा शूद्रया ब्राह्मणी यदि।
षड्रात्रेण विशुद्धिः स्याद् ब्राह्मण्याः कामचारतः §॥
अज्ञानतश्चरेदर्द्धं ब्राह्मणी सर्व्वस्पर्शने॥"

---

‡ मनुः—। ख।

† चण्डालः पतितो वापि।

* नटचर्म्मकारधीवरादि-स्पर्शेऽपि।

§ कामकारतः। क।

अत्र यथा ब्राह्मण्या ब्राह्मणी-रजस्वला-स्पर्शे उपवासः पञ्चगव्यं तथा क्षत्रिया-वैश्या-शूद्राणामपि रजस्वलानां सवर्णास्पर्शे उपवासः पञ्चगव्यमेव। तथा ब्राह्मण्या क्षत्रियास्पर्शे त्रिरात्रम्। क्षत्रियाया वैश्यास्पर्शे वैश्यायाः शूद्रास्पर्शे त्रिरात्रमेव। तदुक्तम्—

"रजस्वला तु या नारी अन्योऽन्यं स्पृशते यदि।
सवर्णे पञ्चगव्येन त्रिरात्रमसवर्णके॥"

पञ्चगव्येनेति उपवाससहितपञ्चगव्येनेत्यर्थः। उत्तमायाः स्पर्शे हीनवर्णायाः स्नानमात्रम् ‡।

तथा च बृहद्विष्णुः—

"अधिकवर्णां रजस्वलां स्पृष्ट्वा स्नात्वाऽश्नीयात्॥"

अर्थात् क्षत्रियाया रजस्वलायाः शूद्रस्पर्शे पञ्चरात्रमित्यूहनीयम्। सर्वत्रैवोपवासासामर्थ्येऽफालकृष्टनीवारादिभक्षणं योजनीयम् *।

यत्तु मार्कण्डेयेनोक्तम्—

"उदक्या तु सवर्णा स्त्री स्पृष्ट्वा चेत्स्यादुदक्यया।
तस्मिन्नेवाहनि स्नात्वा शुद्धिमाप्नोत्यसंशयम्॥"

तत्स्नानात् पूर्व्वं शुद्धिदिवसीयस्पर्शे सति द्रष्टव्यम्। यदि तु उच्छिष्टया रजस्वलया उच्छिष्टा स्पृश्यते † तदाहाङ्गिराः—

"उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित् स्त्री रजस्वला।
पूर्व्वाकृच्छ्रं प्रकुर्व्वीत शूद्रा दानोपवासतः।

अत्र पूर्व्वाशब्देन ब्राह्मणी-क्षत्रिया-वैश्याऽभिधीयन्ते। तेन यदि ब्राह्मणी रजस्वला उच्छिष्टा उच्छिष्टया ब्राह्मण्या रजस्वलया स्पृश्यते तदा कृच्छ्रं प्राजापत्यम्। एवं क्षत्रिया क्षत्रियया वैश्या वैश्यया स्पृश्यते तदा कृच्छ्रं प्राजापत्यमेव ‡। शूद्रा तु शूद्रया स्पृष्टा कृतोपवासा ब्राह्मणाय किञ्चिद्दत्त्वा शुध्यतीति।

तेन ब्राह्मण्याः क्षत्रियास्पर्शे प्राजापत्यद्वयम्। वैश्यास्पर्शे प्राजापत्यत्रयम्। शूद्रा-स्पर्शे प्राजापत्य-चतुष्टयम्।

---

‡ उत्तमवर्ण-स्पर्शे तु हीनवर्णायाः स्नानमात्रम्। ख।

* सर्व्वत्रैतदुपवाससामर्थ्येऽफालकृष्टनीवारादिभक्षणं योजनीयम्। क।

† यदि तु उच्छिष्टा रजस्वला उच्छिष्टया स्पृश्यते। ख।

‡ तत्रापि प्राजापत्यमेव। ख।

एवं क्षत्रियाया वैश्या-स्पर्शे प्रजापत्यद्वयम्। शूद्रा-स्पर्शे प्राजापत्य-त्रयम्। वैश्यायाः शूद्रास्पर्शे प्रजापत्यद्वयमित्यूहनीयमिति।

सर्व्वञ्चेदं कामतः स्पर्शे द्रष्टव्यम्। अकामतस्तदर्द्धम्।

यदि तु उच्छिष्टा रजस्वला रजकादिना § स्पृश्यते तदा त्रिरात्रम्। यदि पुनः रजकादिभिरुच्छिष्टैः स्पृश्यते तदा प्राजापत्यम्।

तथा श्व-शृगाल-कुक्कुटाभिरप्युच्छिष्टा रजस्वला स्पृश्यते तदापि प्राजापत्यमेवेत्यूहनीयमिति।

इदानीं निन्दित-विवाह-प्रायश्चित्तं निरूप्यते। तत्र **वृहद्धारीतः**—

"ज्येष्ठे विद्यमाने दाराग्निहोत्रमनुजः पूर्व्वं यः करोति स परिवेत्ता परिवित्तिर्ज्येष्ठः परिवेदनीया कन्या परिदायी दाता परिकर्त्ता याजकः सर्व्वे चैते पतिताः संवत्सरं प्राजापत्येन कृच्छ्रेण पारयेयुः" *।

इदङ्कामतः अकामतस्तदर्द्धम्।

अदोषविषयमाह **शातातपः**— †

"खञ्ज-वामन-कुब्जेषु गद्गदेषु जड़ेषु च।
जातान्ध-वधिरे मूके न दोषः परिवेदने॥
पितृव्यपुत्राः सापत्नाः परगामि-सुताश्च ये।
दाराग्निहोत्र-संयोगे न दोषः परिवेदने॥
क्लीवे देशान्तरस्थे च पतिते प्रव्रजिते तथा।
योगशास्त्राभियुक्ते च न दोषः परिवेदने॥"

तथाह **सुमन्तुः**—

"मातुल-सुता-पितृसगोत्रा-समानार्षेयीणां विवाहे चान्द्रायणञ्चरेत् परित्यज्येनां विभृयात्॥"

तथा **स्वल्पशातातपः**—

"विवाहयेत् सगोत्रां य स्तनयां मातुलस्य च।
ऋषिभिश्चापि तुल्यां (ल्यो) यो द्विजश्चान्द्रायणञ्चरेत्॥"

अथ निन्दित-प्रतिग्रह-प्रायश्चित्तं निरूप्यते। तत्र चाण्डाल-प्रतिग्रहे पतित-चाण्डालयोस्तुल्यत्वात्।

---

§। रजक्या ख।
* वापयेयुः। ख।
† वृहच्छातातपः। ख।

"चाण्डालान्त्य-स्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च।
पतत्यज्ञानतो विप्रो ज्ञानात् साम्यन्तु गच्छति॥"

इत्यत्र चाण्डाल-स्त्रीगमनेन सह चाण्डाल-प्रतिग्रहसमभिव्याहारस्य निन्दार्थत्वेनोक्तत्वाद् यदेव महापातकिप्रतिग्रहे प्रायश्चित्तमभिहितं तदेव द्रष्टव्यम्।

रजकाद्यन्त्यजप्रतिग्रहस्य तु **स्वल्पयमे**नोक्तमेव प्रायश्चित्तम् *।

तथा च **स्वल्पयमः**—†।

"रजकश्चर्म्मकारश्च नटो वरूड़ एव च।
कैवर्त्तो मेद-भिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ‡॥
भुक्त्वा चैषां स्त्रियो गत्वा पीत्वापः प्रतिगृह्य च।
ज्ञानात् कृच्छ्राब्दमुद्दिष्टमज्ञानादैन्दवद्वयम् §॥"

एतच्च वचनमत्यन्ताभ्यासविषयमित्यगम्यागमन-परिच्छेदेऽभिहितम् **। तेन ज्ञानतोऽत्यन्ताभ्यासेन †† रजकाद्यन्त्यजप्रतिग्रहे वार्षिकं प्रायश्चित्तम्। अर्थादभ्यासप्रतिग्रहेऽस्यार्द्धम्। सकृत् प्रतिग्रहे तु ततोप्यर्द्धम्। अज्ञानतस्त्वत्यन्ताभ्यासे चान्द्रायणद्वयम्। अभ्यास-प्रतिग्रहेऽस्यार्द्धम्। सकृत् प्रतिग्रहे तस्याप्यर्द्धमित्यूहनीयम्।

राज-प्रतिग्रहे तु **वृद्धहारीतः**—

"राज्ञः प्रतिग्रहं कृत्वा मासमप्सु सदा वसेत्।
षष्ठकालं पयोभक्षः पूर्णे मासि प्रमुच्यते॥"

अत्र मासैक-जलनिवास-सहित-षष्ठकाल-भोजनेन पञ्च धेनवो भवन्ति। अत्र राजशब्देन क्षत्रियोऽभिप्रेतः ‡‡ किन्तु तद्व्यतिरिक्त एव राज्यकारी §§ तत्प्रतिग्रहस्यैव।

"न राज्ञः प्रतिगृह्णीयादराजन्य-प्रसूतितः।"

इति **मनुना** (४।८४) निषिद्धत्वात्।

---

* रजकाद्यन्त्यजप्रतिग्रहे तु स्वल्पयमोक्तमेव प्रायश्चित्तम्। ख।

† तथा हि। क।

‡ अन्त्यजाः स्मृताः। ख। मेधभिल्लाश्च। मेधिभिल्लाश्च इति च अन्यत्र दृश्यते।

§ क पुस्तके "कृच्छ्राब्दमाचरेद् ज्ञाना"दिति प्रथमपादे पाठः।

** एतच्च वचनमत्यन्ताभ्यासादिति। क।

†† अत्यन्ताभ्यासे। क।

‡‡ अभिमतः। क। "अत्र राजशब्देन न क्षत्रियोऽभिप्रेतः" इत्येव पाठः प्रतिभाति।

§§ राज्यानधिकारी। क।

तेन

"दशसूनासमं चक्रं दशचक्रसमो ध्वजः।
दशध्वजसमा वेश्या दशवेश्यासमो नृपः॥
दशसूनासहस्राणि यो वाहयति सौनिकः।
तेन तुल्यः स्मृतो राजा घोरस्तस्य प्रतिग्रहः *॥" (४।८५।८६)

इत्यादीन्यपि प्रतिग्रहनिन्दकानि वचनानि क्षत्रियव्यतिरिक्तनृपविषयाणि † द्रष्टव्यानि।

अश्ममणिमातङ्गतिलहोमा(हेमा)द्यसत्प्रतिग्रहे तु **मनुः**—(११।१९४)

"जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्॥"

सर्व्वञ्चेदं प्रतिग्रहलब्धद्रव्यपरित्यागे सति द्रष्टव्यम्।

तथा च **मनुः**—(११।१९३)

"यद्गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव च॥"

तथा **सुमन्तुः**—

"शूद्रयाचकः सर्व्वद्रव्यत्यागी पूतो भवति प्राजापत्येन चेति।"

तथा च **बृहद्यमः**—

"अप्सु शातयितव्यं ‡ तद् यद् वित्तं तस्य गर्हितम्।
प्रतिग्रहोऽवदातव्यः शिष्टानां ब्रह्मचारिणाम्॥"

वेदविद्ब्राह्मणे प्रतिग्रहं दातुमसमर्थोऽसत्प्रतिग्रहोपात्तं वित्तं जले निक्षिप्य प्रायश्चित्तं कुर्य्यादित्यर्थः।

अथ ब्राह्मणस्याविक्रय्य-विक्रय-प्रायश्चित्तम्। तत्र **पैठिनसिः**—

---

* मुद्रितमनुसंहितायान्तु—"दशध्वजसमो वेशो दशवेशसमो नृपः" इति कुल्लूकभट्टसम्मतः पाठः। व्याख्यातञ्च तेन तत्रभवता वचनजातम्। यथा—गोविन्दराजस्तु "दशवेश्यासमो नृपः" इति पठति। मेधातिथिप्रभृतयः प्राञ्चः "दशवेशसमो नृपः" इति पठन्ति। सूनादिशब्दैस्तद्वानुपलक्ष्यते। दशसूनावत्सु यावान् दोषस्तावान् एकस्मिन् चक्रवति तैलिके, यावान् दशसु तैलिकेषु दोषस्तावान् एकध्वजवति शौण्डिके, यावान् दशसु ध्वजवत्सु दोषस्तावान् एकत्र वेशवति। यावान् दशसु वेशवत्सु दोष स्तावान् एकत्र राजनि। उत्तरोत्तरनिन्दा चेयं पूर्व्वदातृसम्भवे सत्युत्तरवर्जनार्थमपेक्षया योज्यते।

"सूना प्राणिवधस्थानं सूनावान् पशुमारणपूर्व्वकमांसविक्रयजीवी। चक्रवान् वीजवधविक्रयजीवी तैलिकः। ध्वजवान् मद्यविक्रयजीवी शौण्डिकः। वेशः पण्यस्त्रियाभृतिःतया यो जीवति स्त्री पुमान् वा स वेशवान्।" इति ८४ श्लोके व्याख्यानम्।

† कुल्लूकभट्टस्तु—"तस्मात्तस्य प्रतिग्रहो नरकहेतुत्वाद्भयानकः क्षत्रियस्यापि"।

‡ सादयितव्यं। ख।

"अविक्रेयाणि ब्राह्मणस्य पक्वमन्नं लवणं मधुक्षीरं दधि घृतं शर्करा लाजा लाक्षारक्तवासः गुड़ं तैलं * सर्व्वे चारण्याः पशवः विद्यापूर्त्तेष्टशङ्का इति। तेषामेकतराणि प्राजापत्यं चरेत् †। तथा च वृहद्विष्णुः—

"आर्द्रौ(र्द्रौ)षधी-पुष्प-फल-चर्म्म-वेत्र-विदल-तुष-कपाल-केश-भस्मास्थि-पिन्याक-तिल-तैलविक्रयी प्राजापत्यञ्चरेत्।"

तथा वृद्धहारीतः—

"और्ण्य-केश-केशरि-हस्तिनीलीनां विक्रयं कृत्वा तप्तकृच्छ्रं § मणि-मुक्ता-प्रवाल-नख-दन्त-शङ्ख-शुक्ति-वेणु-वैणव-मृन्मयविक्रये च।"

अत्र तप्तकृच्छ्रे धेनुद्वयम्। तथा शंखलिखितौ—

"मांस-मधु-जतु-मधूच्छिष्ट-त्रपु-सीसक-कृष्णलौह-औडुम्बरपात्रविक्रये महाशान्तपनम्।" अत्रापि धेनुद्वयम्।

देवगृह-प्रतिश्रयोद्यान-सभा-प्रपा-तड़ाग पुण्यसेतु-भूमि-विक्रयं कृत्वा तप्तकृच्छ्रञ्चरेत् अत्रापि धेनुद्वयम्।

"मांसादीनामत्यन्ताभ्यासविक्रये चान्द्रायणं पुनरुपनयनञ्चेति।

तदाह वृहद्विष्णुः—

"मांस-लवण-लाक्षा-क्षीरविक्रयी चान्द्रायणं कुर्य्यात्तञ्चोपनयेदिति।"
एतच्चाविक्रेयविक्रयणप्रायश्चित्तं—

"यद्गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसैव चेति"

वचनादविक्रेयविक्रयलब्धधनस्य परित्यागे सति द्रष्टव्यम्।**

तेन मूल्यपरित्यागे सति विशेषातिशयात् कथं क्षीरगजादीनां विक्रयणे प्रायश्चित्तसाम्यमिति चोद्दनीयम् ‡।

---

* गुड़तैलं। ख।

† खपुस्तके तु "विद्यापूर्त्तेष्टाशङ्का" इत्यनन्तरं "पूर्त्तव्याख्यानं स्वस्त्ययनं दक्षिणा न ग्राह्या" इत्यधिकं दृश्यते। अपि च "तेषामेकतराणीत्यत्र" तेषामेकतरेणापीति पाठः। "पूर्त्तव्याख्यानं" इत्यत्र पूर्त्तं व्याख्यानं इति भिन्नपदं युक्तमुत्पश्याम। एतेषां कर्म्मणां दक्षिणा न ग्राह्या इत्यपि प्रायः।

§ हस्ती नीली एषां विक्रये तप्तकृच्छ्रं। ख।

** वचनादित्यतः पूर्व्वं "मनु" इत्यधिकं क-पुस्तके दृश्यते।

‡ न देशनीयम्। ख।

अथ द्रव्यशुद्धिः— ‡ । तत्र देवलः—

यत्र प्रसूयते नारी म्रियते दह्यते तथा § ।
चाण्डालाध्युषितं यत्र यत्र मूत्रादि-सङ्गतिः ॥
एवं कश्मल-भूयिष्ठा भू रमेध्या प्रकीर्त्तिता ।
श्वशूकरखरोष्ट्राद्यैः संस्पृष्टा दुष्टतां व्रजेत् ॥

अत्र शुद्धिमाह देवलः—

"खननाद्दहनाच्चैव उपलेपनधावनात् ।
पर्य्यन्य-वर्षणाच्चैव ¶ भूरमेध्या विशुध्यति" ॥

तथा वृहद्यमः—

"खननापूरणाद्दाहादतिवर्षणलेपनात् ।
गोभिराक्रमणात् कालाद् भूमिः शुध्यति सप्तभिः" ॥

अथ गृहशुद्धिः । तत्र वृहस्पतिः— *

"श्वशूद्रपतिताश्चान्त्या मृताश्चेद्द्विजवेश्मनि ।
शौचन्तत्र प्रवक्ष्यामि मनुना भाषितं यथा ॥
दशरात्रात् शुनि प्रेते मासात् शूद्रे भवेच्छुचिः ।
द्वाभ्यान्तु पतिते गेहे मन्त्ये मासचतुष्टयात् ॥
अत्यन्ते वर्ज्जयेद्‌गेहमित्येवं मनु रब्रवीत्" ॥

तथाह यमः—

"द्विजस्य मरणे वेश्म विशुध्येत दिनत्रयात् ।
दिनैकेन वहिर्भूमिरग्निप्रोक्षण-† लेपनैः" ॥

यथोक्तकालानन्तरमपि प्रोक्षणादिना समन्त्रकेण शुद्धिः ।

यथा संवर्त्तः—

"गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिते ।
प्रोत्सृज्य मृन्मयं भाण्डं सिद्धमन्नन्तथैव च ॥

---

‡ अथ भूमिशुद्धिः । क ।

§ यत्र प्रम्रियते जन्तुः सूयते दह्यतेऽथवा । ख ।

¶ पर्य्यन्यवर्षणेनैव । क ।

* तथा वृहद्यमः । ख ।

† प्रक्षेप इति युक्तं ।

गृहादपास्य तत् सर्व्वं गोमयेनोपलेपयेत्।
ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारिणा ॥
सर्व्वमभ्युक्षयेद्वेश्म ततः शुध्येत् न संशयः"।

इति गृहशुद्धिः।

**यमः**—

"अजा गवो महिष्यश्च ब्राह्मणी च प्रसूतिका।
दशरात्रेण शुध्यन्ति भूमिष्ठ ञ्च नवोदकम्" ॥

तथा च **व्यासः**—

"भूमिष्ठमुदकं मेध्यं वैतृष्ण्यं यत्र गो र्भवेत्।
अव्याप्तञ्चेदमेध्येन तद्वदेव शिलागतम् ॥
वर्णगन्धरसैर्दुष्टैर्व्वर्जितं यदि तद् भवेत्"।

तथा **मनुः**—(५।१२८)

"आपः शुद्धा भूमिगता वैतृष्ण्यं यत्र गो र्भवेत्।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः" ॥ *

तथा **शङ्खः**—

"भूमिष्ठमुदकं शुद्धं शुचितोयं शिलागतम्।
गन्धवर्णरसैर्दुष्टैर्वर्जितं यदि तद्भवेत्" ॥

तथा **देवलः**—

"अक्षोभ्याना मपां नास्ति प्रभूतानाञ्च दूषणम्।
स्तोकानामुद्धृतानाञ्च दोषे दुष्टत्व मिष्यते ॥
उद्धृताश्चापि शुध्यन्ति शुद्धैः पात्रैः समुद्धृताः।
एकरात्रोषिता आपस्त्याज्या मेध्या अपि स्वयम्" ॥

इत्युदकशुद्धिः।

अथ काञ्चनभाण्डादिशुद्धिः। तथा च **मनुः**—(५।११२)

"निर्लेपं काञ्चनं भाण्ड मद्भिरेव विशुद्ध्यति।
अब्जमश्ममयञ्चैव राजतञ्चानुपस्कृतम् †" ॥

---

* यत्र इत्यत्र "यासु" इति कुल्लूकसम्मतः पाठः। व्याख्यातञ्च वचनं तेन। "यत् परिमाणासु गोः पिपासाविच्छेदो भवति ता आपो गन्धवर्णरसशालिन्यः सत्यः यद्यमेध्यलिप्ता न भवन्ति तदा विशुद्धभूमिगता विशुद्धाः स्युः। भूमिगता इति विशुद्धभूमिसम्बन्धप्रदर्शनाय न त्वन्तरिक्षगतानां निवृत्त्यर्थम्।"

† अनुपस्कृतं रेखादिरहितमित्यर्थः।

तथा **बृहद्यमः**—

"मणिमुक्ताप्रवालानां शङ्खानामुपलस्य च ।
अज्ञानाच्चैव सर्व्वेषामद्भिः शौचं विधीयते" ॥

तथाह **बृहस्पतिः**—

"अम्भसा हेमरूप्यायः कांस्यं शुद्ध्यति भस्मना ।
अम्लाम्भसा ताम्रकञ्च * पुनर्दाहेन मृन्मयम्" ॥

तथा **चाङ्गिराः**—

"गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च ।
शुद्ध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च" ॥

तथा **चापस्तम्बः**—

"भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ।
सुराविण्मूत्रसंस्पृष्टं शुध्यति तापलेखनैः" ॥

तथा **बौधायनः**—

"तैजसानां पात्राणां मूत्र-पुरीष-शुक्रासृक्-कुनप-मद्यैः स्वल्पसंसर्गे † परिलेखनं गोमूत्रे वा सप्तरात्रं परिस्थापयेत्" ।

मद्यादिभिश्चिरसंसर्गे **विष्णुः**—

"अत्यन्तोपहतं सर्व्वं लोहभाण्डमग्नौ प्रक्षिप्तं शुध्यति । मणिमयमश्ममयं सर्व्वञ्चाब्जमयं सप्तरात्रं महीखननेन" ‡ ।

अत्र सुवर्णादीन्यपि लोहशब्दाभिधेयानि भवन्त्येव ।

अतिचिरकालं मद्यादिसंसर्गे **बौधायनः**—

"तैजसानाञ्च मूत्र-पुरीष-शुक्रासृक्-कुनपमद्यैरत्यन्तवासितानामग्निना वर्त्तनमतैजसानामुत्सर्गः" ।

तथा **शङ्खः**—

"सिद्धार्थकानां कल्केन शृङ्गदन्तमयस्य च ।
गोबालैः फालपात्राणामश्मनां § शृङ्गवत्तथा" ॥

---

* ताम्रपात्रं । ख ।

† स्वल्पकालसंसर्गे । ख ।

‡ महीलिखनेन । ख ।

§ मज्जानां । ख ।

तथा **बृहद्व्यासः**—

"मृदाद्भिः शुध्यते दारु तक्षणेनातिदूषितम्।
मार्त्तिकञ्च पुनः पाकात् त्याज्यं मूत्रादिदूषितम्" ॥

इति सुवर्णादिपात्रशुद्धिः।

अथ धान्यवाससां बहूनां शुद्धिः तत्राह **मनुः**—(५।११८)

"अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्।
प्रक्षालनेन त्वल्पाना मद्भिः शौचं विधीयते ॥
चैलवच्चर्म्मणां शुद्धि र्वैदलानां तथैव च।
शाकमूलफलानाञ्च धान्यवच्छुद्धि रिष्यते" ॥ (५।११९)

वैदलो वल्कलविकारः। बहुत्वञ्च वस्त्रस्य वर्णभेदेन विभिन्नं द्रष्टव्यम्।

तथा च **लोकाक्षिः**—

"द्वाभ्यामूर्द्धं सरङ्गाणि वस्त्राणि प्रोक्षणे न तु।
दशारभ्य विचित्राणि सितान्यारभ्य विंशतेः" ॥

तथा **चाङ्गिराः**—

"संहतानि च वस्त्राणि पटकूट्याविकानि च।
कामाच्चाण्डालसंस्पर्शे प्रोक्षणात् शुद्धितामियुः ॥"

पटकुटी वस्त्रगृहम्। आविकं कम्बलम्। तथा **देवलः**—

"तूलिकामुपधानञ्च पुष्परक्ताम्बराणि च।
शोषयित्वातपे * किञ्चित् करैः सम्मार्ज्जयेन्मुहुः ॥
पश्चाच्च वारिणा प्रोक्ष्य विनियुञ्जीत कर्म्मसु।
और्णं-राङ्कव-कौशेय-पट्ट-क्षौम-दुकूलजाः † ॥
अल्पशौचा भवन्त्येते शोषण-प्रोक्षणादिभिः ‡।
तान्येवामेध्ययुक्तानि क्षालयेत् शोधनैः स्वकैः ॥"

तथा **बौधायनः**—

मूत्र-पुरीष-लोहित-रेतसोपहतानां वाससां मृदद्भिस्तु प्रक्षालनम्। वासोवत् वल्कलानाम्। वल्कलवत् कृष्णाजिनानामिति ॥" इति वस्त्रादिशुद्धिः।

---

* तपैः। क।

† और्ण-कौषेय-कुतप-पट्ट-क्षौम-दुकूलजाः। क।

‡ शोषयेत् प्रोक्षणादिभिः। ख।

अथ धान्यादिशुद्धिः। तथा बृहद्विष्णुः—

"बहूनां धान्याजिन-रज्जु-तान्तव-वैदल-सूत्र-कार्पासवाससां प्रोक्षणेन शाक-मूल-पुष्पाणाञ्च तृण-काष्ठपलाशानाञ्च। एतेषां प्रक्षालनेनाल्पानाम्। असिद्ध-स्यान्नस्य यावन्मात्रमुपहतं तावन्मात्रं परित्यज्य शेषस्य कण्डनप्रक्षालने कुर्य्यात्।

गृहदाहे समुत्पन्ने विपन्ने पशुमानुषे।
अभोज्य स्तद्गतो व्रीहिर्धातुमात्रस्य संग्रहः॥"

इति धान्यादिशुद्धिः।

अथ सिद्धान्नशुद्धिः। तथा च वशिष्ठः—

"देवद्रोण्यां विवाहे च यज्ञेषु प्रततेषु च।
काकैःश्वभिश्च संस्पृष्टं तदन्नं नैव दुष्यति॥*
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति॥"

संस्कारो जलाभ्युक्षणम्। घृतप्रक्षेपश्च। तथा बृहद्विष्णुः—

"द्रोणादधिकं सिद्धमन्नमुपहतं न दुष्येत। तस्योपहतमात्रं† अपास्य गायत्र्याभिमन्त्रितं सुवर्णाम्भः प्रक्षिपेत्। सूर्य्यस्य दर्शयेत् अग्निस्पर्शनम्॥"

मनुः—(५।१२५)

"पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्।*
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति॥†

तथा याज्ञवल्क्यः—(१।१८९)

"गोघ्रातेऽन्ने तथा केश-मक्षिका-कीटदूषिते।
सलिलं भस्ममृद्वापि प्रक्षेप्तव्यं विशुद्धये॥"

बृहद्वशिष्ठः—

"प्रचरन्नन्नपानेषु उच्छिष्टं यदि संस्पृशेत्।
भूमौ निधाय चाचान्त स्ततप्रोक्ष्य प्रचरेत् पुनः॥"

---

* अन्नं तत्र विवर्ज्जयेत्। क।

† तत्रोपहतमात्रम्। ख।

* मवक्षुतम्। क।

† केशकीटाद्यैर्घृतक्षेपेण शुध्यति। क।

तथा बृहस्पतिः—

"अरण्ये निर्ज्जने ‡ रात्रौ चौरव्याघ्राकुले पथि।
कृत्वा मूत्रं पुरीषं वा द्रव्यहस्तो न दुष्यति॥
शौचन्तु कुर्य्यात् प्रथमं पादौ प्रक्षालयेत्ततः।
उपस्पृश्यस्तदभ्युक्ष्य गृहीतं शुचितामियात्॥
गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः।
न मीमांस्यानि § शौचानि स्त्रीभिराचरितानि च॥"**

सिद्धान्नशुद्धिः। षट्त्रिंशन्मतम्—

"आममांसं घृतं तैलं मधुस्नेहाः फलोद्भवाः।
अन्त्यभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयो मताः॥"

तथापस्तम्बः—

"आममांसं तथा क्षौद्रं यच्च गोषु पयः स्थितम्।
अन्त्यजादपि संग्राह्यं सोमोच्छिष्टं न दुष्यति॥"

तथा चतुर्ऋषिमतम्—††

"दधिसर्पिः पयः क्षौद्रे भाण्डदोषो न विद्यते।
मार्ज्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः॥"

तथा लौकाक्षिः—

"पयो दधिविकारादि शुचिपात्रान्तरस्थितम्।*
प्लावनोत्प्लावनाभ्याञ्च पर्य्यग्निकरणेन च॥"

तथाह वशिष्ठः—

"द्रवाणां प्लावनेनैव घनानां प्रोक्षणेन च।
छागेन मुखसंस्पृष्टं † शुचिरेव हि तद्भवेत्॥

---

‡ अरण्ये उदके। ख।
§ अमीमांस्यानि। ख।
** "स्त्रीषु बालातुरेषु च" इति बहुसम्मतः पाठः।
†† चतुर्षिमतम्। क।
* पयोदधिविकारश्च शुचिपात्रान्तरस्थिताः।
† मुखस्पृष्टन्तु। क।

बालेन च परिक्रान्तं स्त्रीणामाचरितञ्च यत्।‡
प्रसारितञ्च यत् पण्यं न दोषः स्त्रीमुखेषु च॥
शय्या भार्य्या शिशु र्वस्त्रमुपवीतं § कमण्डलुः।
आत्मनः शुचयो नित्यं न परस्य कदाचन॥**
अमेध्यभूजा †† ये वृक्षाः पत्रपुष्पफलोपगाः।
तेषां नैव प्रदुष्यन्ति पत्रपुष्पफलानि च॥"

इति बालवल्लभीभुजङ्गापरनामभट्टश्रीभवदेवकृतौ
प्रायश्चित्तप्रकरणे संसर्गप्रायश्चित्तपरिच्छेदः।

## अथ कृच्छ्राण्यभिधीयन्ते *।

"गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम्।
आप्यायस्वेति च क्षीरं दधिक्राव्णेत्यृचा † दधि॥
तेजोसि शुक्रमित्याज्यं देवस्य त्वाकुशोदकम् ‡।
गोमूत्रपलं § तस्यार्द्धं सकृत् क्षीरस्य च त्रयम्॥
द्वयं दध्नो घृतस्यैक मेकञ्च कुशवारिणः।
ब्रह्मकूर्च्चमिदं नाम व्रतं सर्व्वाघसूदनम्॥"

एतच्च कुशोदकसहितपञ्चगव्यपानमुपवासपूर्व्वकं कर्त्तव्यम्।
तथा च **यमः**—

"आहृत्य प्रणवेनैव उत्थाप्य प्रणवेन च।
प्रणवेन समालोड्य प्रणवेनैव तत्पिबेत्॥"

तथाह **याज्ञवल्क्यः**—

"कुशोदकन्तु गोक्षीरं दधिमूत्रं शकृद्घृतम्।
प्राश्यापरेद्यु रुपवसेत् कृच्छ्रं सान्तपनं स्मृतम्॥" इति।

---

‡ स्त्रीभिराचरितञ्च यत्। ख।
§ भार्य्याशय्यासनं वस्त्र। ख।
** आत्मनः कथिताः शुद्धा नापरस्य कदाचन। ख।
†† अमेध्यभूस्था। ख।
* कृच्छ्रप्रायश्चित्तान्यभिधीयन्ते। ख।
† दधिक्राव्णेति वै दधि। ख।
‡ तेजोसीति घृतञ्चैव देवस्यत्वा कुशोदकम्। ख।
§ गोमूत्रभाग। ख।

एतच्च द्व्यहः साध्यं सान्तपनं पृथक्। **

"पृथक्सान्तपनद्रव्यैः षड़हः सोपवासकः।

सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः॥" (यां ३।३१५)

अत्र षड्भिर्दिवसैः प्रत्येकं कुशोदकादिपानात् पश्चोपवासकल्पनं †† तेन मिलित्वा षडुपवासाः। अत्रैका धेनुः।

तथा शङ्खः—

"एतदेव त्र्यहाभ्यस्तं यतिसान्तपनं स्मृतम्।"

एतदिति सान्तपनद्रव्यस्यैव परामर्शः। एतच्चोपवासेन सह चतुरहः साध्यं सान्तपनम्। तथा यमः—

"एतान्येव च पेयानि एकैकञ्च द्व्यहं द्व्यहम्।*

अतिसान्तपनं नाम श्वपाकमपि शोधयेत्॥"

एतच्च द्वादशाहः साध्यम्। अत्र धेनुद्वयम्।

"त्र्यहं पिबेत्तु गोमूत्रं त्र्यहं वै गोमयं पिबेत्।

त्र्यहं दधि त्र्यहं क्षीरं त्र्यहं सर्पिं स्ततः शुचिः।

महासान्तपनञ्चैतत् सर्व्वपापप्रणाशनम्॥"

एतच्च पञ्चदशाहः साध्यं महासान्तपनान्तरम्। अत्र धेनुद्वयम्। लघुगुरु-पापभेदेन सान्तपनानां व्यवस्था।

"पर्णोडुम्बरराजीवविल्वपत्रकुशोदकैः।

प्रत्येकं प्रत्यहाभ्यस्तैः† पर्णकृच्छ्र उदाहृतः॥" इति (यां ३।३१६)

पर्णः पलाशः। राजीवं पद्मम्। एतच्च पञ्चाहः साध्यम्। एतेषामुदकं पञ्चभिर्द्दिवसैः क्रमेण पेयम् अत्रैका धेनुः।

"एतान्येव समस्तानि त्रिरात्रोपोषितः शुचिः।

क्वाथयित्वा पिबेदम्भः पर्णकृच्छ्रोऽभिधीयते॥"

एतच्च चतुरहः साध्यं पर्णकृच्छ्रान्तरम्। अत्राप्येका धेनुः।

तथा वशिष्ठः—

"पद्मोडुम्बरपलाशविल्वाश्वत्थकुशानामुदकं पीत्वा षड्रात्रेणैव शुध्यति।"

एतच्च षड़हः साध्यं पर्णकृच्छ्रान्तर मत्राप्येका धेनुः। तथा च वशिष्ठः—

** एतच्च द्व्यहः साध्यं सान्तपनम्। पृथक्सान्तपनम्। क। एतच्च द्व्यहः साध्यम्। ख।

†† पञ्चोपवासकल्पनया सान्तपनम्। क।

* त्र्यहं त्र्यहम्। ख।

† प्रत्येकं प्रत्यहं पीतैरिति मिताक्षरासम्मतः पाठः।

"कुशपलाशोडुम्बरविल्वाश्वत्थशङ्खपुष्पीवटब्रह्मसुवर्च्चलापत्राणां प्रत्येकं क्वथितस्याम्भसः प्रत्यहं पानेन पर्णकृच्छ्र उदाहृतः। एतच्चाष्टाहः साध्यं ‡ पर्णकृच्छ्रान्तरम्। अत्र धेनुद्वयम्। लघुगुरुपापभेदेन व्यवस्था। तथाह **वैवस्वतः**—

"पलमेकं पयः पीत्वा सर्पिषस्तु पलद्वयम्।
पलमेकन्तु तोयस्य तप्तकृच्छ्र उदाहृतः॥"

एतच्च दिनत्रयसाध्यम्। तथाह **याज्ञवल्क्यः**—(३।३१७)

"तप्तक्षीरघृताम्बूनां प्रत्येकं प्रत्यहं पिवेत्।
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः॥"

एतच्च चतुरहः साध्यं तप्तकृच्छ्रान्तरम्। तथाह **मनुः**—(११।२१४)

"तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्।
प्रति त्र्यहं पिवेदुष्णान् सकृत्स्नायी समाहितः॥"

एतच्च द्वादशाहः साध्यं तप्तकृच्छ्रान्तरम्। अत्र धेनुद्वयम्। लघुगुरुपापभेदेन तप्तकृच्छ्राणां व्यवस्था।

तथा **मनुः**—(११।२११)

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परञ्च नाश्नीयात् प्राजापत्यविधिः स्मृतः॥"

**तथापस्तम्बः**—

"प्रातस्तु द्वादशग्रासाः सायं पञ्चदशैव तु।
अयाचिते चतुर्विंशः परे निरशनं क्रमात्॥
(कुक्कुटाण्डप्रमाणन्तु यावद् वा प्रविशेन्मुखम्।
एवं ग्रासं विजानीयात् शुध्यर्थं कायशोधनम्॥")*

एवं द्वादशाहःसाध्ये प्राजापत्ये षडुपवासाः †। अत्रैका धेनुः।

**तथापस्तम्बः**—

"सायं प्रातस्तथैवैकं दिनद्वयमयाचितम्।
दिनद्वयं न भुञ्जीत कृच्छ्रार्द्धन्तु विधीयते॥" ‡

---

‡ कुशपलाशोडुम्बरविल्वशङ्खपुष्पीवटब्रह्मसुवर्च्चलापत्राणां प्रत्येकं क्वाथं तस्याम्भसः प्रत्यहं पाने पर्णकृच्छ्रम्। एतच्च सप्ताहः साध्यम्। ख।

* बन्धनीक्रोड़ीकृतः पाठो क-पुस्तके नास्ति।

† एवं द्वादशदिनैः प्राजापत्येन षडुपवासाः। क।

‡ विनिर्द्दिशेत्। ख।

इदन्तु षड़हः साध्यं प्राजापत्यार्द्धम् ।

तथा **याज्ञवल्क्यः**— (३।३१८)

"एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः § ॥"

एष ¶ चतुरहःसाध्यः प्राजापत्यपादः ।

तथा **मनुः**— (११।२१३)

"एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्व्ववत् ।
त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रं चरन्नरः ॥" ‖ इति ।

प्राजापत्यव्रतमेव यदा सायं प्रातरयाचितभोजनानि ग्रासमात्रपरिमितानि भवन्ति तदा अतिकृच्छ्रमेतच्च द्वादशाहःसाध्य मत्र धेनुद्वयम् ।

तथा **याज्ञवल्क्यः**—

"कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् ।" **

पयोजलं न तु दुग्धम् । "अब्भक्षः कृच्छ्रातिकृच्छ्र" इति **गौतम**वचनात् । एतच्च एकविंशतिदिनसाध्यम् । अत्र धेनुचतुष्टयम् ।

तथा चोक्तम्—(याँ ३।३२०)

"द्वादशाहोपवासेन पराकः परिकीर्त्तितः ।"

अत्र धेनुद्वयम् ।

"पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ।
एकरात्रोपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥" (याज्ञवल्क्य—३।३२१)

पिण्याको गलितस्नेह स्तिलपिण्डः । आचामो भक्तमण्डः । एष सौम्यकृच्छ्रः षड़हःसाध्यः । अत्रैका धेनुः ।

"एषां त्रिरात्रमभ्यासादेकैकं प्रत्यहं पिवेत् ।*
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥"

---

§ कृच्छ्रपादः । क । "उपवासेन चैवायं पादकृच्छ्रः प्रकीर्त्तितः" इति संहितायां पाठः ।

¶ एवम् । क ।

‖ चरन् द्विज इति संहितायां पाठः ।

** मिताक्षरासम्मतः "कृच्छ्रातिकृच्छ्र" इति पुंलिङ्गप्रयोगः ।

* "देकैकस्य यथाक्रम"मिति मिताक्षरासम्मतः पाठः । किञ्चान्यत्—
इतः पूर्व्वं "सायं द्वाविंशतिर्ग्रासाः प्रातः षड़्विंशतिस्तथा ।
अयाचिते चतुर्विंशः परञ्चानशनं स्मृत"मिति खपुस्तके अधिकं दृश्यते ।

एषां पिण्याकादीनां पञ्चानां प्रत्येकं त्र्यहं त्र्यहं पानात् पञ्चदशाहःसाध्यं तुलापुरुषव्रतम्। अत्र धेनुद्वयम्।

तथा **वशिष्ठः**—

"एकैकं वर्द्धयेत् पिण्डं शुक्ले कृष्णे च ह्रासयेत्।
अमावस्यां न भुञ्जीत एष चान्द्रायणो विधिः॥

पिण्डाश्च मयूराण्डप्रमाणाः कर्त्तव्याः। तथा **याज्ञवल्क्यः**—(३।३२३)

"तिथिवृद्ध्याचरेत् पिण्डान् शुक्ले शिख्यण्डसम्मितान्।
एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन्॥"

एतच्च यववन्मध्येस्थूलमिति "यवमध्य" चान्द्रायणम्। अत्र मासैकेन पञ्चविंशत्यधिकशतद्वयग्रासमात्राहारेणोपवासेन चैकेन क्लेशाधिक्याच्चान्द्रायणाशक्तौ सत्यां—

चान्द्रायणमकुर्व्वाणैः कार्य्यं कृच्छ्रचतुष्टय"

मित्येतद्विषयत्वम्। तेनात्र धेनुचतुष्टयं। तथा च **यमः**—

"अष्टावष्टौ समश्नीयात् पिण्डान् मध्ये दिनस्थिते।
नियतात्मा हविष्यस्य यतिचान्द्रायणं चरेत्॥"

तथा **बृहद्विष्णुः**—

"अष्टौ ग्रासान् प्रतिदिवसं मासमश्नीयात् यतिचान्द्रायणो मासः।" (यतिचान्द्रायणं नाम)।*

अत्र मासैकेन चत्वारिंशदधिकशतद्वयपिण्डाहारेणोपवासाभावेन क्लेशाल्पत्वाद् यतिचान्द्रायणाशक्तौ सत्यां—

"चान्द्रायणं त्रिभिः कृच्छ्रैः पराकस्तु द्वयेन च।
एतत् कृच्छ्र-प्रमाणन्तु विद्वद्भिः परिकीर्त्तितम्॥"

इत्येतद्वचनविषयत्वम्। तेनात्र यतिचान्द्रायणे धेनुत्रयम्।

तथा **मनुः**—(११।२१९)

"चतुरः प्रातरश्नीयात् पिण्डान् विप्रः समाहितः।
चतुरोऽस्तमिते सूर्य्ये शिशुचान्द्रायणं चरन्।"

तत्रापि यतिचान्द्रायणवदेव धेनुत्रयम्।

---

* स्मृतम्" इति संहितायां पाठः। ( ) एतच्चिह्नक्रोडीकृतःपाठः कपुस्तके सर्व्वशेषे दृश्यते।

तथा **बृहद्विष्णुः**—

"त्रींस्त्रीन् पिण्डान् समश्नीयात् नियतात्मा दृढ़व्रतः।
हविष्यान्नस्य वै मासं ऋषिचान्द्रायणञ्चरन्॥"

अत्र मासैकेन नवतिपिण्डाहारेण क्लिश्यातिशयात्

चान्द्रायणाशक्तौ सत्यां—

"चान्द्रायणपराकाभ्यां निष्कृतिं यो न शक्नुयात् *।
स करोत्यात्म-शुद्ध्यर्थं प्राजापत्यन्तु पञ्चकम्॥"

इत्येतद्वचनविषयत्वम्। तेनात्र पञ्चैव धेनवः।

"त्र्यहं पिबेच्च गोमूत्रं त्र्यहञ्च गोमयं पिबेत्।
त्र्यहं त्र्यहं यावकञ्च तप्तकृच्छ्रं तदुच्यते॥"

एतच्च द्वादशाहः साध्यं, अत्र धेनुद्वयम्।

तथा च **मार्कण्डेयः**—

"गोमूत्रेण चरेत् स्नानं † वृत्तौ गोमयमाचरेत्।
गवां मध्ये सदा तिष्ठेत् गोपुरीषे च संविशेत्॥
गोषु पीतासु च पिबे दुदकं व्रतमाचरन्।
अभुक्तासु न चाश्नीयादुत्थितासूत्थितो भवेत्॥
तासु चैवोपविष्टासु ततः सूपविशेन्नरः।
मासेनैकेन कथितं गोव्रतं कल्मषापहम्॥"

अत्र पञ्च धेनवः।

तथा **यमः**—

"गवामाहार-निर्मुक्तैर्यवैः सक्तून् समश्नतः।
याम्यं कृच्छ्रं समुद्दिष्टं मासेन स्मृतिपारगैः॥
सर्व्वकाम-प्रदं ह्येतत् सर्व्वकल्मषनाशनम्।"

अत्रापि पञ्च धेनवः। इति कृच्छ्रपरिच्छेदः।

इति बालबलभीभुजङ्गापरनामकभट्टश्रीभवदेवकृतौ प्रायश्चित्तप्रकरणं समाप्तम्।

---

* नवाप्नुयात्। ख।

† गोमूत्रेणाचरेदन्नं। क।

# परिशिष्टम् ।

## वचनप्रतीकाः ।

### अ



### आ

## शुद्धिपत्रम् ।

| पृष्ठा | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २२ | दारेण | द्वारेण |
| ३ | ५ | ब्रह्मघातकम् | ब्रंह्मघातकम् |
| „ | १७ | कर्त्तरपि | कर्त्तुरपि |
| ४ | २ | म्रियन्ते | म्रियन्ते |
| ६ | ८ | हेतकं | हेतुकं |
| ७ | ७ | इत्यहनीयम् | इत्यूहनीयम् |
| ८ | २१ | स्नायवस्थि | स्नाय्वस्थि |
| १३ | १४ | व्रतमादिशेति | व्रतमादिशेत् |
| १५ | ३ | षड़पवास | षड़ुपवास |
| १६ | ५ | गोरवात् | गौरवात् |
| „ | २५ | चातुर्गुण्यं मिति | चातुर्गुण्यमिति । |
| १८ | ८ | लघुणि लघूणि | लघुनि लघूनि |
| „ | १० | न्यनुष्ठेवानि | न्यनुष्ठेयानि |
| „ | १४ | तन्ते ण | तन्त्रेण |
| „ | १८ | लघुणि लघूणीति | लघुनि लघूनीति |
| „ | २० | विजातीयान्यव | विजातीयान्येव । |
| „ | २२ | सजातीयापेचत्व | सजातीयापेचत्वे |
| २० | १७ | षन्मासा | षण्मासा |
| „ | २५ | स्तम्बे न | स्तम्बे न |
| २२ | ६ | गौतमि नोक्तम् | गौतमेनोक्तम् |
| „ | ८ | ऋषभैक | ऋषभैक |
| „ | २५ | द्वैगुण्याह्निक | द्वैगुण्यादिक |
| „ | १२ | भ्रूणद्दत्या | भ्रूणहत्या |
| „ | २१ | चत्रियादि पुरूष | पुरुष |
| २४ | १० | षान्मासिक | षाण्मासिक |
| „ | २२ | दर्शपौर्णसामादि | दर्शपौर्णमासादि । |
| २५ | २६, २५ | सवर्णव्यभिचरिता | सवर्णव्यभिचरिता |

| पृष्ठा | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २७ | १३ | शूद्राखा | शूद्राणा |
| २८ | १६ | मारूते | मारुते |
| २९ | २ | दव्या | द्रव्या |
| ३० | १७ | सचेतनम् । | मचेतनम् । |
| ३१ | १४ | मूहणीयम् । | मूहनीयम् । |
| ३३ | ११ | लाङ्गुलस्यच | लाङ्गूलस्यच । |
| ,, | १४ | त्तैमासिक | त्रैमासिक । |
| ३४ | ६ | लोष्ट्रेख | लोष्ट्रेण |
| ३५ | २९ | व्यतिरिक्तेनाभिप्रेता: | व्यतिरिक्तेणाभिप्रेता: । |
| ३७ | २० | च्चोत्तम | च्चोत्तम् |
| ,, | २७ | सहर्षिणा | महर्षिणा । |
| ३८ | १८ | अथाच | तथाच |
| ,, | २६ | अपि भूणहनं | अपि भ्रूणहनं |
| ३९ | १ | ब्रह्मधेऽपि | ब्रह्मवधेऽपि |
| ३९ | ४ | व्रतरुप | व्रतरूपं |
| ४१ | १३ | निर्न्नीयते | निर्णीयते |
| ४२ | २४ | दग्निवर्नां | दग्निवर्णां |
| ४५ | १४ | पानोपक्रमस्यानिष्पन्नतात् | पानोपक्रमस्यानिष्पन्नत्वात् । |
| ४८ | १३ | मवेदिति | मेवेति । |
| ,, | २८ | थिण्पनी | टिप्पनी । |
| ५० | ६ | प्रमादातो | प्रमादतो |
| ५५ | १ | पस्तम्ब: | आपस्तम्ब: |
| ,, | २४ | दतिदूषिततम् | दतिदूषितम् । |
| ५६ | ३ | गोच्चीरं | गो:च्चीर |
| ५७ | ९ | विम्नत्सा | विवत्सा । |
| ६७ | २३ | नाद्याद् विधिना | नाद्यादविधिना । |
| ६८ | ५ | भञ्जीत | भुञ्जीत |
| ७१ | ३ | जानानां | जातानां |
| ,, | १६ | दव्यस्य | द्रव्यस्य |
| ७४ | ७ | तपसापननुतस्तस्तु | तपसापनुनुतस्तस्तु |

| पृष्ठा | पंक्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ७४ | १८ | ब्रह्महो | ब्रह्महा । |
| ७५ | १४ | ननुत् सु | नुनुत्सु । |
| ७६ | ४ | नचेवं सति | नचैवं सति |
| ,, | ८ | मासका | माषका |
| ,, | ९ | मासकपर्य्यन्तं | माषकपर्य्यन्तं |
| ,, | १० | मासकापहरणे | माषकापहरणे |
| ७६ | १४ | यदि सान्तपनं | यतिसान्तपनं |
| ७६ | १५ | यदि सान्तपनं स्मृतम् | यतिसान्तपनं स्मृतम् । |
| ७६ | १८ | यदि सान्तपनं | यतिसान्तपनं |
| ८१ | २३ | महापातकिन विमे | महापातकिनस्त्विमे । |
| ४५ | ३ | गुरुतल्पगमनाया | गुरुतल्पगमनयो |
| ८९ | २ | मातुलानीन्तू | मातुलानीन्तु |
| ८९ | १८ | समानो गोत्रजां | समानगोत्रजां |
| ९२ | १२ | व्याभिचारिपि | व्यभिचारिपि |
| ९३ | ९ | सपिंषाऽभुच्य | सपिंषाऽभ्युच्य |
| ९४ | २६ | नट | नटीं |
| ९६ | २६ | गविरेवमिति | गवि चैवमिति |
| ९८ | १७ | विविवद्धोमान् | विधिवद्धोमान् । |
| १०० | ३ | गोर्द्दया | गोर्द्दया |
| १०० | १५ | त्र्यहमुपवसेद्युक्त | त्र्यहमुपवसेद्युक्तः । |
| १०४ | १४ | आलापोऽन्यान्यसङ्कथनं | आलापोऽन्योन्यसङ्कथनं |
| १०४ | २३ | पापसंक्रमनमात्रे | पापसंक्रमनमात्रे |
| १०५ | ९ | संवत्सरेण पततीत्य | संवत्सरेण पततीत्यस्य |
| ११३ | १९ | ज्ञानाज्ञानयोस्त्वत्यन्ताभासतो | ज्ञानाज्ञानयोस्त्वत्यन्ताभ्यासतो । |
| ११७ | ५ | श्वसृगालकुक्कुटाभि | श्वसृगालकुक्कुटादिभि |
| ११७ | ७ | त्युहनीयमिति | त्यूहनीयमिति । |
| १२० | २६ | दक्षिणा न ग्राह्या इत्यपिप्रायः । | दक्षिणा न ग्राह्या इत्यभिप्रायः । |
| १२१ | ३ | चाण्डालध्युषितं | चाण्डालाध्युषितं |
| १२२ | ३ | अजागवो | अजागावो । |

